एक देव-सदा-युक्ताः, एक-मंत्र-विधि-क्रिया ऽपृथग्धर्मास्त्वेकवेदाः,धर्मं एकं अनुव्रताः, अकामफलसंयोगात् प्राप्नुवंति परां गतिं; एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितं" (म० भा०, वन० अ०-१५१)। "पुरुरवस एवासीत् त्रयी त्रेतामुखे,नृप !,अग्निना प्रजया राजा लोकं गांधर्वमेयिवान्" (भा०) । (पाठकानां लेखकानां बोधह्रासात्तु, कालत , पाठास्तु विकृताः नूनं ; आशयः किन्तु सर्वथा स्पष्टः एवेतिहासानां पुराणानां च संमतः, यद्—आदिकाले नैवअसन् वर्णाः वेदाः तथैव च, मानस-आप्त-आदिसिद्धिभ्यो हि अग्निनांपेक्षितोऽपि च ; त्रेतायामेव वर्णांश्च, वेदाश्चौपधयस्तथा, अग्न्युद्दीसेरुपायाश्च,प्रजास्त्वासन् व्यवस्थिताः; पाश्चात्यानां च विदुषां प्रायो ह्येतादृशं मतं,मानवानां जीवनस्य विकासस्य युगैरपि;,७४०),युगानि गणयंति एते, परन्तु, अन्यादृशानि वं,अन्येषु अपि विशेषेषु मतभेदोऽस्ति भूरिशः) । बुद्धोऽपि भगवान् , योऽवतारो हि दशमः स्मृतः,धर्मसंस्थापनार्थाय,विष्णोर् जातस्तु भारते,सोऽपि ननु इमं एवाऽर्थं भूयोभूयः उपआदिशत्, "न जच्चा ( जात्या ) वसलो (वृषलो) होति,न जच्चा होति ब्राह्मणः;कम्मुना वसलो होति,कम्मुना होति ब्राह्मणः"(वसलसुत्त,२१)। बुद्धस्य समकालीनः, बन्धुश्च, भगवान् जिनः महावीरो, 'हिन्दु'-वरः तं एवार्थं शशास च, "कम्मुणा बम्भणो होइ, कम्मुणा होइ खत्तिओ, कम्मुणा वइसो होइ, सुद्दो हवइ कम्मुणा; सक्खं खु दीसइ तवोविसेसो न दीसई जाइ विसेस कोई"; ( साक्षात् खलु दृश्यते तपो-विशेषो, न दृश्यते जाति-विशेषः कोऽपि ); ( उत्तर-अध्ययन-सूत्र ) "अन्नन्नदेसजाया, अन्नन्नाहारवड्ढियसरीरा, जिनसासने पवन्ना सव्वे ते बंधवा भणिया", ( अन्याऽन्यदेशजाताः, अन्याऽन्यआहारवर्धितशरीराः, जिन-शासने प्रपन्नाः, सर्वे ते बांधवाः भणिताः );"मनुष्यजातिर् एका एव, जातिनामोदयोद्भवा, वृत्तिभेदाद् हि तद्भेदः चातुर्विध्यं इह अश्नुते ; ब्राह्मणाः व्रत-संस्कारात् , क्षत्रियाः शस्त्रधारणात्, वणिजोऽर्थार्जनात् न्यायात् , शूद्राः न्यग्वृत्ति-संश्रयात्",(जैनागम)।(७५०)। भार्गवोऽपि इमं एवार्थं स्व-नीतौ वक्ति असदायं - "न जात्या ब्राह्मणश्चात्र,क्षत्रियो,वैश्यः एव वा, न शूद्रो, न च वै म्लेच्छो;भेदिताः गुणकर्मभिः, ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं न ब्राह्मणाः? न वर्णतो,न जनकाद्, ब्राह्मं तेज प्रपद्यते ; ज्ञान-कर्मो-पासनाभिः देवताआराधने रतः, शांतो दांतो दयालुश्च ब्राह्मणस्तु गुणैः कृतः ; लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी दुष्टनिग्रहशीलो य स वै क्षत्रियः उच्यते ; क्रयविक्रयकुशलाः ये नित्यं पण्यजीविनः, पशु-

रक्षा, कृषिकरा, ते वैश्या कीर्तिता भुवि, द्विजसेवाऽर्चनरता शूरा शान्ता जितेन्द्रिया, सीरकाष्ठतृणवहा ते नम्रा शूद्रसञ्ज्ञका, त्यक्तस्वधर्मऽाचरणा निर्घृणा परपीडका, चण्डाश्च हिंसका नित्य,म्लेच्छास्ते हि अविवेकिन" (शु० नी० अ० १)

उक्त, ब्रह्मा प्रकार एव वर्ण वृत्ति विभाजन, त्रेतायुगमुखे पूर्वं, अवधार्य तु तत्र यद् 'ब्रह्म (1)' शब्दस्तु बह्वर्थं स्मर्तव्योऽत्र, यथा 'मनु', (७६०), (१) 'महत्तत्त्व, बुद्धितत्त्व', यच्च जगद्व्यापक सत्ता, धाता विधाता सर्वेषा नियमाना जगद्गते, तस्यैव यो रजोंऽशोऽस्ति, स 'ब्रह्मा' अस्ति विशेषत, महत्तत्त्वस्य सत्त्वांशो विष्णुरित्यभिधीयते, तमोंऽशश्च महेशोऽस्ति, पुराणपरिभाषया, सत्त्वद्गुणाभिमानेन, देवजीवास्तथैव, च, (२) गुरु, वृद्धतमो, मार्गी, 'मनो' रपि च य 'पिता', 'पितामह'श्च सर्वेषा, आपत्सु उपदेशक पर:, (३) सर्वेषु 'यज्ञ'-कृत्येषु 'ऋत्विङ् मुख्यो,' निरीक्षक, 'यज्ञ'श्च सर्व कार्यं सद् यत् लोकस्योपकारक, एते त्रय प्रधानार्था, 'ब्रह्म(1)' शब्दस्य हि स्मृता। 'मनो, महान्, मति, ब्रह्मा, पुर, बुद्धि, ख्याति, ईश्वर, प्रज्ञा, चिति, स्मृति, सविद्, विपुर (८), चोच्यते बुधे। ×तत्त्वाना अग्रजो यस्मात्, महाश्च परिमाणत शेषेभ्योऽपि गुणेभ्योऽसौ, महान् इति तत स्मृत, × बृहत्त्वाद्, बृंहणत्वाच्च भावाना सलिलाश्रयात्, यस्माद् बृंहयते भावान्, 'ब्रह्मा' तेन निरुच्यते,। × बुध्यते पुरुषश्चात्र सर्वभावान्, हिताहितान्, यस्माद् बोधयते चैव,तेन बुद्धिर्निरुच्यते (७७०), × वर्तमानानि अतीतानि तथाऽनागतानि च,स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते, × यस्माद् पुरि अनुशेते च तस्माद् पुरुष उच्यते, × पर्यायवाचकै शब्दै तत्त्व आद्य तु गीयते" (वायु०पु०पू०अ०४)। "कूटस्थो योऽक्षरोऽव्यक्तो हि, अन्तरात्मा, सनातन, स सिसृक्षु सहस्राशाद् असृजत् पुरुष प्रभुं, 'मानसो' नाम य पूर्वो विश्रुतो वै महर्षिभि, × मानसस्य इह या मूर्ति 'ब्रह्म(1)'त्व समुपागता, तस्यअसनविधानाऽर्थं पृथिवी पद्म उच्यते, × तस्मात् पश्चात् समभवद् 'ब्रह्मा' वेदमयो निधि, 'अहङ्कार' इति ख्यात· सर्वभूतआत्मभूतकृत्" ( म०भा०शां० १८० )। "महान् आत्मा, मति, विष्णु, जिष्णु शंभुश्च वीर्यवान्, बुद्धि, प्रज्ञा,उपलब्धिश्च, तथा ख्याति, धृति, स्मृति, पर्यायवाचकै शब्दै महानआत्मा विभाव्यते" (अनुगी०)।

"आर्योनार्येषो कर्मेण व्यतिक्षेपे साम्य,वर्णान्तरगमन मुत्कर्षापकर्षाभ्या ससम

पञ्चमे वा''(गौतमस्मृ०२-२ ६१,१-४-१८)।''अधर्मचर्यया पूर्वो वर्णो जघन्य जघन्य वर्णं आपद्यते जातिपरिवृत्तौ, धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं'' (आपस्तम्बसू०)। ''जात्युत्कर्षो युगे ज्ञेय पञ्चमे सप्तमेऽथवा, व्यत्यये कर्मणा साम्यं पूर्ववच्चाऽधरोत्तर'(याज्ञ० अ० १)।(७८०)।''कुलानि अकुलतां यान्ति, कुलता अकुलानि च, अश्रेयान् श्रेयसीं जातिं गच्छति आसप्तमाद्युगात्, शूद्रो ब्राह्मणतां एति, ब्राह्मणश्चैति शूद्रता'' (म०)। ''तपो बीज प्रभावैस्तु ते गच्छन्ति, युगे युगे, उत्कर्षं च अपकर्षं च मनुष्येष्विह जन्मतः। तपः श्रुतं च योनिश्च द्विजत्वे कारणं स्मृतम्। सकरे जातयस्त्वेता, पितृमातृप्रदर्शिता, प्रच्छन्ना वा प्रकाशा वा, वेदितव्या स्वकर्मभि, शुचिर् उत्कृष्टशुश्रूषु, मृदुवाग, अनहंकृत, ब्राह्मणाद्याश्रयो नित्य उत्कृष्टां जातिं अश्नुते' (म०)। 'वर्णार्थो 'जाति'शब्दोऽत्र पाञ्चवत्सरिको युग, वत्सराणां च पञ्चानां नामानि कथितानि अपि, संवत्सरो, इद्वत्सरश्च, परिवत्सर एव च, अनुवत्सरस्तथैव उदावत्सरश्चेति पञ्च ते। (शब्दकल्पद्रुमे विष्णुधर्मोत्तरपुराणोद्धरण), ''संवत्सरोऽसि, परिवत्सरोऽसि, इदावत्सरोऽसि, इद्वत्सरोऽसि, वत्सरोऽसि। उषसस् ते कल्पताम्, अहोरात्रास्ते कल्पताम्, मासास्ते कल्पन्ताम्, ऋतवस्ते कल्पताम्, संवत्सरस्ते कल्पतां'' (यजु, २७ ४५ ३०-१५)। संवत्सरोऽसि, परिवत्सरोऽसि, इदादिक शीतमयूखमाली, प्रजापतिश्चान्वनुवत्सर स्याद्,इद्वत्सर सोऽच्युतपतिश्च''(सू०सि० ८,१४)।(७९०)।पर अर्थे, परम् अर्थेऽपि, 'युग'शब्द प्रयुज्यते, प्रपितामह इत्येक, द्वितीयस्तु पितामह, तृतीयश्च पिता ज्ञेय, स्वय पुत्रश्चतुर्थक, पौत्रस्तु पञ्चमस्तत्र, षष्ठस्तु परस्तथा, हित्वा 'पुत्रौ' च 'पौत्रौ' चाप्यस्य रूपान्तराणि हि। 'स्वकर्मभिर्वेदितव्या', कर्म शब्दोऽत्र सार्थक, कर्मैव 'वर्ण' निर्णेता इत्याशयोऽभिमतस्ततः।

जन्मवर्णाभिमानस्य भयावह परिणाम।

यद् त्रयोऽपि द्विजा भ्रष्टा स्वधर्मात् प्रायशोऽधुना, दृश्यन्ते छलिनो जाता, तारकाश्चापि मारका, पोषका शोषकाश्चैव, धारकाश्चापहारका, 'जन्मनैव हि वर्णत्व' सर्वं विलसितं स्वित्। 'जन्मनैव हि वर्णत्व' चेद्, अल कृत्येन् अपार्थकं ''कृतकृत्या सर्ववर्णा, यदि वृत्त न पश्यति''(म०भा०)। जन्मनैव हि सिद्ध सन् 'क्षत्रियो', 'ब्राह्मणो' अथवा, रक्षा शौर्यं स्वकं कृत्य, तपोविद्यात्मकं तु वा 'स्वधर्म'मज्ज अकृत्वाऽपि 'स्वोच्चवर्णात्' न हास्यते, पूर्वां कृत्योचितां चापि कृत्य

अभावेऽपि लभ्यते, एव विगतभार दत्त कर्तव्य स्व प्रहास्यति, जिघृक्षिष्यति सर्वेषा अधिकाराश्च मत्तधो । सर्वो दण्डभिया लोक स्व स्वं कृत्य करोति हि, "सर्वो दण्डजितो लोको, दुर्लभो हि शुचिर्नर, दण्डस्य हि भयात् सर्वं जगत्" कृत्ये ऽधितिष्ठते(म०), (८००), "भयाद् एषाग्निस्तपति, भयात् तपति सूर्य, भयाद् इन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम "(उ०)।"ब्राह्मणो न अवमतव्य सद् असद् वा समाचरन्","न जातु ब्राह्मण हन्यात् सर्वपापेषु अवस्थित", 'अविद्वो वा सविद्वो वा ब्राह्मणो मामकी तनु ","बालोऽपि न अवमतव्यो मनुष्य इति भूमिप, महती देवता ह्येषा नररूपेण तिष्ठति", 'सर्वेषा देवसुरयाना अग्रीशैद् विनिर्मित सद् असद् वा नृप कुर्यात्, सर्वं सह्य जनैस्तु तत्'—इत्यस्तीहशान् श्लोकान् यत् येषन कथा' मनु तान् स्वार्थपरदण्डस्य वञ्चनार्थंय केवल, प्रक्षिप्ताश्च ईहशा श्लोका स्वार्थसाधनतत्परै, असद् समाचरन्निश्च नृप, इ यनुमीयते। नहि सद्- ब्राह्मण कश्चित्, सर्वलोकहिते रत, पुण्यकारी, सदाचारी, ब्रह्म धम चर सदा, सत्य ब्राह्मणसज्ञार्हं, वनु ण्व इहार्हति। न अतास्तस्रो वापि राजा, प्रकृ तिरञ्जक, धर्मदण्डधरो, न्यायकरो, निष्पक्षमानस, एव क्रूर अधर्म च यनुमर्हति कर्हि- चित्, येन वृद्धिस्तु पापाना भवेद् अयोऽपि पापिना।(८१०)।मिथ्याश्लोकास्तर्य इमे विरुध्यते मनूक्तिभि। नैवासी 'ब्राह्मणो' य स्यात् "सर्वपापेष्वपि स्थित", अतद् समाचरद् यस्तु स कथ 'ब्राह्मणो' भवेत्? "योऽनधीय द्विजो वेद अन्यत्र कुरुते श्रम, स जीवन्नेव शूद्रत्व आशु गच्छति सान्वय, न तिष्ठति तु य पूर्वां (सन्ध्या), नोपास्ते यश्च पश्चिमा, स शूद्रवद् बहिष्कार्य सर्वस्माद् द्विजकर्मण" (म०), नैतद् घोरतम पाप, वेदानध्ययन तु यत्, भ्रूणपापसम नापि तथ्योपासनवचन, शूद्र त्वऽपि तु [redacted] तथापि न्यो हि मनुना धृत, ब्राह्मण्य अवशिष्येत सर्वपापस्थितौ कथ? 'ये वकव्रतिनो विप्रा, ये [redacted] मार्जारलिंगिन, न वारि अपि प्रयच्छेत् तान्, वाङ्मात्रेणापि नार्चयेत्। गुरु वा बालवृद्धौ वा, ब्राह्मण वा बहुश्रुत, आततायिन आयान्त हन्याद् एवाविचारयन्"(म०),"(अग्निदो, गरदश्चापि, शस्त्रोन्मत्तो, धनापह, क्षेत्रदारहरश्चापि, षडेभवति आततायिन" (शु०नी०), (यस्मात् आतत आयाति, 'अति'च अस्य अधम तथा, 'आततायी' इति नाम्ना इह ततोऽसौ अभिधायते)।(८२०) "दण्डो हि सुमहत्तेजो, दुर्धरश्च अकृतात्मभि, धर्माद् विचलित हति नृपमेव सबान्धवं, दुष्टेषु सर्वयणाश्च, विशेषेन् सर्वमतप, सर्वलोकप्रकोपश्च भवेद्,

दण्डस्य विभ्रमात्, न राजा प्रणयन् सम्यक्, त्रिवर्गेण अभिवर्धते कामात्मा विषम क्षुद्रो, दण्डेनैव निहन्यते, अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवाप्यदण्डयन्, अयशो महद् आप्नोति, नरकं चाधिगच्छति" (म०)। आशयाश्च, तथाऽज्ञाश्च, पुण्या एवंविधा मनो, क्षिप्तश्लोकप्रशयान् नाथ भगवान् वक्तुमर्हति। स्वयं भीष्ममुखाद् व्यास प्रशास्त्येव युधिष्ठिर—"युक्तश्च प्रजा स्वाश्च भृत्यांश्च परिपालय। योग क्षेमश्च ते नित्य ब्राह्मणेषु अस्तु भारत, अनर्थो ब्राह्मणस्य एव यद् वित्तनिचयो महान् श्रिया हि अभीक्ष्ण संवासो, दर्पयेत्, सम्प्रमोहयेत्, ब्राह्मणेषु प्रमूढेषु, धर्मो विप्रणशेद् ध्रुव, धर्मप्रणाशे, भूतानां अभाव स्यात्, न संशय"। धिक् तस्य जीवित राज्ञो, राष्ट्रे यस्य अवसीदति द्विजो वा,ऽन्यो मनुष्यो वा, शिबिर् आह वचो यथा,(८३०),यस्य स्म विषये राज्ञ स्नातक सीदति क्षुधा अवृद्धिमेति तद्राष्ट्र, विन्दते 'सहराजक', ( समूहीभूय राजान तद् अन्येऽभिद्रवन्ति वै, प्रजाकोपाद् विप्लव च विन्दते 'तद्धि अराजक)। क्रोशन्त्यो यस्य वै राष्ट्राद् ह्रियन्ते तरसा स्त्रिय, क्रोशतां पतिपुत्राणां, मृतोऽसौ,न स जीवति, अरक्षितार हर्तार विलोप्तार अनायक, त वै राजकलिं हन्यु प्रजा, सन्नह्य, निर्घृण, अहं वो रक्षिता इत्युक्त्वा, यो न रक्षति भूमिप, स संहत्य निहन्तव्य श्वा इव सोन्माद आतुर, पाप कुर्वन्ति यत् किंचित् प्रजा राज्ञा हि अरक्षिता, चतुर्थं तस्य पापस्य राजा विन्दति भारत" (म० भा० अनु० अ० ९६)। बहवश्चापि राजान उद्दण्डा दण्डिता भृशं, प्रजापीडाकरा ये हि, पूर्वकाले महर्षिभि। "वेनो विनष्टो ऽविनयात्, नहुषश्च नराधिप" (म०)। अर्वाचीनेतिहासेऽपि दुष्टा शिष्टैर्हता नृपा बहवो, बहुदेशेषु, न अधर्मो निष्फलो भवेत्। तृतीयस्य द्विजस्यापि वैश्यस्य विषये स्मृत, धनातिगृध्नु, कृपण, पात्रेभ्यो न ददाति च, जनता हितकार्यार्थं, धन तस्य हरेत् नृप,(८४०),"यो वैश्य स्याद् बहुपशुर्, हीनक्रतुर, असोमप, कुटुम्बात् तस्य तद्द्रव्य आहरेद् यज्ञसिद्धये; आदाननित्याच् च अदातुर् ( विप्रस्यापि ) अप्रयच्छत, योऽनाहिताग्नि शतगु, अयज्वा च सहस्रगु; तयोरपि कुटुम्बाभ्यां आहरेद् अविचारयन्"(म०)। अथवा,यदि न क्षिप्ता श्लोका स्ते, तर्हि तेऽन्यथा व्याख्येया स्यु, प्रसङ्गानां अवस्थानां विवेकत, ("न जातु ब्राह्मण हन्यात् सर्वपापेष्वपि स्थित, महती देवता हि एषा राजा"—इत्यादयस्तु ये) 'देशकालनिमित्तानां भेदैर्धर्मो विभिद्यते, अन्यो धर्म समस्थस्य, विषमस्थस्य

चापर, न हि सर्वोहित कश्चिद् आचार मप्रवर्तते, तस्माद् अन्य प्रभवति, सोऽपरं बाधते पुन आचाराणां अनैकाग्र्य तस्मात् सर्वत्र दृश्यते, नहि एव ऐकान्तिको धर्मो, धर्मस्तु भावस्थिरः स्मृत " ( म०भा०शा० )। कस्मिंश्चिद् अपि पूर्वस्मिन् काले, अन्यान्यपरिस्थितौ, भवेयुर् उचितास्मात्कश्लोका, नैव अद्य ते तथा—यद् दशार्होऽपि नो दृश्यते 'ब्राह्मण','क्षत्रियो'ऽपि वा। समये समयेऽस्तो हि, स्मृतयोऽपि भवा नवा कृता, आदिस्मृतेर् एव मनो, संकोच विस्तरै भवतो, न तु मूलोऽस्य सिद्धान्त परिवर्तित, वर्णाश्रमात्मको वस्तु, "गुण कर्म विभागश ", स्वभावात् तु गुण, तस्मात् कर्म, वर्ण. तत स्मृत।(८५२)।

'जन्मना वर्ण' इत्यस्य सत्य अर्थ च १

'जन्मना एव हि वर्णोऽस्ति'–इति अभीष्ट यदि कस्यचित्, व्याख्या तत्रापि कार्या इयं, सर्वसवादसाधिका—'जन्मना एव हि शूरोऽय, बलवान् जन्मनाऽपर, जन्मना एव हि रुग्णोऽय, देहेऽय जन्मना दृढ, सद् य कविताकारि सद् गाता ऽस्य जन्मना, जन्मना मह ज ह्यस्य चक्रवर्तित्वलक्षण जन्मनैव हि जातोऽय गीतविद्याविशारद, अन्यमथा जन्मनैव गणितेषु विचक्षण, विलक्षणोऽन्यस्य रुचि औषधीषु तु जन्मना, महर्षीत्तिम अस्मास्मि निर्भलत्व तु जन्मना, परस्य मूर्धिता तद्वद् बहुव्यापारदक्षता, धनसचयकर्तृणि भाग्यानि अपि च, जन्मना'। सिध्यतु व्याख्यया एवं हि,'जन्मनाऽपि च वर्णता'। कृष्णो वदति 'जवाल ,दृढज जंघ ,मतोऽर्जुन ,मतस भ्रमणे रत ततोऽय ननु जन्मना',(८६०), एक शूर ,परो भीरु , क्रूरोऽन्यो, अन्यो दयापर , दर्शी चाऽन्यो ऋजुश्चान्यो, धीमान् एको,वि धी पर , काणोऽयं, बधिरोऽय वा, मूक , खञ्जो, ऽशक्तिम, सर्वांगसुन्दरो चाऽन्य अरूपो, भवति 'जन्मना'। प्रकृतीना, स्वभावाना, शीलव्यसनयोस् तथा, भिन्नत्व विविध हि एतत् अखिल खलु 'जन्मना'—एव चेद् तु वदते वाक्य,'जन्मना वर्ण' इति सद्, सत्य तत् नूनं अस्ति एव, मय च मम ओम् इति।

गुण कर्म वर्ण-सिद्धान्त सत्पक्ष, गणभेदकारण।

कर्मणा यदि वर्ण स्याद्,कृत्न दृष्ट्वा, विवेकत, कर्माणि प्रविभज्यते "स्वभाव प्रभवैर्गुणै, स्वे स्वे कर्मण्यभिरत संसिद्धि लभ्यते जन, स्वधर्मे निधन श्रेय, पर धर्मो भयावह " (गी०)। स्वधर्मो हि स्व कर्मानि, स्वभावज गुणो स्थित,

स्व भाव प्रकृतिस, तज्जा गुणा ,सत्त्व रजस् , तम , अवस्थाभेदतोऽन्योन्य जन यत्यपि ते गुणा , परस्पर चाश्रयति, तथैव अभिभवत्यपि संयोगश्च सदा तेषा, न पार्थक्य कदाचन (सा० का०, गी०)। पृथ्वयोरेव दम्पत्योर् अतस्तु विविधा प्रजा प्रत्यक्षमेव दृश्यते, शास्त्रोद्घोषोऽत्र नार्थवान् । (७७०)। ' न नाम अनुपपन्न हि प्रत्यक्षे" किंचिद् दृश्यते "प्रमाणानि च प्रत्यक्षपराणि",अत्र न संशय , ' प्रमिति प्रत्यक्षपरा" इत्यादि वै सर्वसमत (न्या०)। "न श्रुताना शतमपि घट पटयितु क्षम" (भामती)। "न प्रमाणान्तरेण इह, माहात्म्य अभिभूयते प्रत्यक्षस्य, तथाऽन्यानि प्रमाणानि, अखिलानि अपि, लभते व्यवहार तु प्रत्यक्ष स्य बलेन हि" (योगभाष्य)। एकपित्रोर्भिन्नगुणा प्रजायन्ते सुतास्तु यत्, तत्र हेतु समाख्याति ज्योतिष, वैद्यक, तथा, सर्वज्ञानमयश्चापि स्वय हि भगवान्मनु । गर्भाधानमुहूर्तस्य प्रभावस्तत्र कारण, शारीरमानसावस्थाभेदा पित्रोस्ततो मत । "सत्त्व रजस्तमो वा, त्रिशाश यस्य भास्करस्स तादृग् बलिन सदृशी मूर्ति, कुर्वा वा जातिकुलदेशान् गुर शशि रवय सत्त्व, रज सित ज्ञौ, तमोऽर्कसुत सोमौ, एतेऽन्तरात्मनि स्वा प्रकृति जन्तो प्रयच्छति । यो यो ग्रहो बलिष्ट, प्रसूतिकाले नृणा स्वमूर्तिसम कुर्याद् देह नियत वहवश्च समागता, मिश्र ' (वराहमिहिर,लघुजातक)। ग्रहाणा च स्वरूपाणि वर्णितानि पृथक्पृथक्। (७८०) ९

---

*आध्यात्मिका चित्तभावा भृष्यन्ते ग्रहनामभि । मनुष्याणा स्वभावाना शान्ती,सम्वादिनी मति ,कल्पहाना प्रशमनी, विपदो प्रतिकारिणी,विवेकिनी सदसतो ,बुद्धिर्या, असौ बृह स्पत ' आत्मज्ञानवती प्रज्ञा सर्वत्र ब्रह्मदर्शिनी, आत्मवत्सर्वभूतेषु पश्यन्ती अपि विवेचन आचरन्ती तथाऽपि एषा, सौशील्यपरिवर्धिनी, अतर्ज्ञानप्रधाना च बाह्यज्ञानोपबृंहिता, प्रत्यक्चेतनसम्पन्ना, पराग्ज्ञानवती तथा, निरन्तर सावधाना सम्यग्दर्शननिष्ठिता, स्वस्य चापि अपराणा च गुण दोष विवेचिनी, सर्वकाले ऽविलुप्ती प्रत्यु पन्नमति , तथा अनागतविधात्री च भूतवृत्ते सुशिक्षिता—सा वै 'जीवो', 'गुरु ,' स ' च, सात्त्विक 'सर्वविन्मति '। ' ॐ बृहस्पते । अति यद् अर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच् छवस, ऋतप्रजात ।, तद् अस्मासु द्रविण धेहि चित्र (१०),ॐगणाना त्वा गणपति हवामहे,कवि कवीना उपम श्रवस्तम, ज्येष्ठराज ब्रह्मणा, ब्रह्मणस्पते', आ न शृण्वन् ऊतिभि सीद सादन, न त अहो न दुरित कुतश्चन, नारातयो तितिरुर, न द्वयाविन , विश्वा इद् अस्माऽध्वरसा

"शुक्रशोणितसंयोगे, यो भवेद्दोष उत्कट प्रकृतिर्जायते तेन", इति सुश्रुत-शासन सु०)। सुश्रुते चरके चैव सप्तैव प्रकृतय स्मृता, पित्तवातकफाना या

---

विभावसे च सुगोपा रक्षसि,ब्रह्मणस्पते। ॐ(ऋग् वेद)। ॐ वेदाहमहारि सवितुर्वरेण्य भर्गो देवस्य कवयोऽन्नमाहु, कर्माणि धियम् तदु ते प्रब्रवीमि, प्रचोदयन् सविता याभिरेति, सुनीतिभिर्नयसि, त्रायसे जन, तस्तुभ्य दाशान्न त ऋहोऽश्नवत्, महाद्विष स्तपनो मन्युभोरसि, बृहस्पते।, महिमसे महित्वन (अथर्व०)। 'सुधी' बहिर्मुखर ज्ञान, विशाल विविध तु यत्,चतुर्भुज च चातुर्य, दर्शन स्पर्शन बहु विषयाणा, चचलत्व (न'सम्यग्दर्शन खलु), राजसी कामसपृक्ता बुद्धिर्—'बुध' इति कथ्यते। भौधालु निग्रही भूयो–'मगलो'ऽत्र अमंगल, रजोमयो विशेषेण, क्रूरोऽसौ भूमिजो ग्रह। 'सौम' सौम्यो, मृदुरपि, मिष्टभाषी, सुशोभन, बहुप्रिय, प्रीतिकर, व्यभिचारा प्रदारदा, क्षयिष्णुश्चापि वर्धिष्णु रोगप्रवण एव च, रजोऽधिक, अल्पसत्वश्च तामसोऽल्पतर तथा। 'गुरु', बोधेन सत्त्वप्र ज्ञानविज्ञानवान् प्रभु,'असुराणा' गुरु, भावाद् बृहस्पतिसमोऽपि च, (२०), विज्ञानेष्वधिकस्तस्मात्, न प्रज्ञान तथा स्थिर, तेजस्वी च, शुभाशसी दययाऽसुरसम्पदाम्, जानन् यत् सा महादेवी, "ससारस्थिति कारिणी" महामाया, महाकाली, महाकालस्य गेहिनी तच्छक्तिरूपिणी, नित्य द्वद्व काल यते जगत्, सुरासुराभ्यां द्वाभ्या वै कुर्वती उदधिमथन उभौ च पालयंती एव, जगद्रक्षा दक्षकारिणी, रसयन्ती रसोन् तस्य, हसती रुदती तथा। बलि [illegible] बोधयन् शुक्र तद् गुरु, सावधानयन् वामनस्य छलान् स हि, शिक्षयन्, वाक्य अब्रवीत् 'गत्य पुष्पफल विवर्द्, अमृतं मूल आत्मन" (भा०)। अविद्या चाऽपि विद्या च, मूल चापि फल क्रमात्, जगद्-अश्वत्थ वृक्षस्य भवतो द्वेय नित्यदा, न फलेन विना मूल न मूलेन विना फल, न अद्वैतेन विना द्वैत्य, न द्वैत्येन विनाऽमृत, नान्धकार विना ज्योति, न प्रकाश विना तम, न सुखेन विना दु ख, न दु खेन विना सुख, न पापेन विना पुण्य, न पुण्येन विनाऽपि पापं,(३०),न दैत्येन विना देवो,न देवेन विनाऽसुर,न जीवेन विना शुक्र,न शुक्रेण विना गुरु, उभाभ्या एव चक्राभ्या सिध्यतीह जगद्गति, तस्माच् छत्रू च मित्रे चाप्येतौ शुक्रबृहस्पती, उभावपि महाविप्रौ, उभावपि महा-मती, महाशक्तिर्, महाकाली, महालक्ष्मीर्, महागिरा, या, ऽस्या एव हि उभौ हस्तौ, दक्षिणो वाम एव च। सत्त्वाधिको, रजोविद्, शुक्रोऽसुरगुरुस्तत। 'केतुर अस्थिरता, भ्रान्ति यत्र तत्र, यदृच्छया। 'राहुश्' छाया,ऽन्धकारो हि, तमो, मोहो

माग्रणा भेदत' कृता । सात्त्विका सप्त, षट् तत्र राजसास, तिस्र एव तु तामसा' वर्णिता , किंतु 'भक्ता लक्षणतो'', नहि सर्वा शक्या प्रसख्यातु, प्राधान्येनैव

---

ऽविवक्ता 'श्रालस्याद् श्रन्नदोषाच्च मृत्युर् विप्रान् जिघांसति'' (मनु) 'निद्रा ऽलस्यप्रमादोत्थ सुख तामस उच्यते''(गी ), जिह्वालौल्याद्अन्नदोष , उपस्थस्याऽपि ऽग्निग्रहात्, प्रमादो, मदनो, मारो, मन्मथो, मादको, मद , जायते प्रबलत्वे तु राहु रागा तृष्णा बहु शारीरा मानसाश्चाऽपि, क्रूरा पीडाकरा भृश । तमोऽधिकौ उभौ एव केतौ किंचिद्रजोऽपि च । रजस्तमोमयो घोर सूर्यपुत्रोऽद्भुत 'शनि' , कदाचिद् भ्रामयति एव, कदाचित् स्थिरयेद् भृश, कदापि उन्मादकारी स्याद्, दीर्घध्यानकरो ऽन्यदा ।(४०)। ग्रहराजस्तु भगवान्'सूर्य 'सर्वनियामक ,''ॐ आकृष्णेन रजसा वर्त्तमान , निवेशयन् अमृत मर्त्यं च, हिरण्ययेन, सविता, रथेन, देवो याति, भुवनानि पश्यन् । सावना पश्चात् सविता पुरस्तात् सविता उत्तरात्तात् सविताऽधरात्तात् सविता न सुवतु सर्वताति सविता नो रासता दीर्घं आयु । श नो भव चक्षसा, श नो अह्ना,श भानुना, श हिमा श घृणेन,यथा श अध्वन् शमसद् दुरोणे,तत् सूर्य !,द्रविण धेहि चित्र । विश्वा हा त्वा सुमनस सुचक्षस प्रजावन्तो अनमीवा अनागस , उद्यन्त त्वा मित्र महो दिवेदिवे ज्योग्जीवा प्रतिपश्येम, सूर्य !'' (ऋग्वेद) । श्रेष्ठराजत्वबुद्धिर्या सा 'सूर्य ' इति वेत्स्यते, शिष्टसमाहिणी शक्तिर्, दुष्टनिग्रहकारिणी, निबर्हणी च पापानां, तेजसा नित्यभासिनी, प्रकाशिनी सुमत्त्वाना, तमसा अभिभाविनी, जगता सद्व्यवस्थाया , जीवानां च, नियामिनी, सूर्यस्य उभौ हि सचिवौ शिष्यौ शुक्रबृहस्पती, मनुना प्रभव सूर्य , महत्तत्त्वमयो महान ''सर्वेषा अवतारणा निधान बीज अव्यय ' (भा०), दधाना आदिदेवोऽसौ, आ द' त्योऽसौ हि कीर्त्यते एव परिक्रमते हि ग्रहा सर्वेऽपि अहर्निशा, विरामभा सम्राज अभितो भनिशो यथा, ''कालेन चानव छेदात् पूर्वेषां अपि अय गुरु '' (यो० सू०) यत कालस्य गणना सम्भाव्या एव हि नाभवत्, प्राक् प्रादु - र्भावात् स्वस्य सवितुर्यदा मन , अयं ' स्वयम्भूर्भगवान्, अव्यक्तो व्यञ्जयन्''उभौ, ' इद ' सर्व, तथाऽस्मान,''प्रादुरासीत् तमोनुद '', ''उद्भौ स स्वय चैव ', निबर्ह तमोऽखिल, ''उद्बबर्ह आत्मनश्चैव ' एतद् मत ''सद् असद् आत्मक ', ' काल, काल विभक्तीश्च 'सर्वा एता ' ससर्ज'' (मनु ),सर्वसत्त्वमय सूर्य महासात्त्विक एव स , तत्त्वमेनाऽपि रजसा सत्त्व अस्य परिष्कृत, रजोमात्राऽनुविद्ध बुद्धिसत्त्व भवेत् ननु, धर्मज्ञानोपगं चापि वैराग्यैश्वर्यगं तथा'' (यो० भा०) । (१४) ।

लक्षण, "महाप्रकृतयस्त्वेता रजस्सत्त्वतम कृता "(सु०), "ब्राह्मादिषु विवाहेषु (सात्त्विकेषु) अनुपूर्वश ,ब्रह्मवर्चस्विन पुत्रा जायंते शिष्टसम्मता:, (रजस्तम प्रधानेषु) नृशंसाऽनृतवादिन जायंते दुर्विवाहेषु ब्रह्म धर्म-द्विष सुता , अनिन्दितै विवाहै तै अनिंद्या भवति प्रजा, निन्दितैर्निन्दिता नृणा, तस्मान् निंद्यान् विवर्जयेत्'' (म०) । सगमे सात्त्विके तूल सात्त्विकी भवति प्रजा , रजस्तमोऽधिके तद्वत् राजसी तामसी तथा , स्त्रीपुंसयोर् यथा भावो मिश्रणे स्यात् शरीरयो , उत्पद्यते नवो देह तादृग्भावेन भावित । दुर्वृत्ता जार जन्मानो भवंति, अत्र कारणं सदैव गर्भाधाने पत्यु पुंश्चियो दुष्टभावता।(८९०)। दृश्यते जन्मपत्रेषु बाल्यकाला अनेकदा कुरुव्यासे विभिन्नस्य वर्णस्य खलु निश्चिति । "सत्त्वाधिको ब्राह्मण स्यात्, क्षत्रियस्तु रजोऽधिक , तमोऽधिको भवेद् वैश्य , गुणसाम्यात्तु शूद्रता"(म०भा०) "सत्त्वगुणो ब्राह्मणो वर्णे , क्षत्रियस्तु रजोगुण , तमोगुणस्तथा वैश्य गुणसाम्यात्तु शूद्रता" ( भविष्य पु० ३,४,२३ ) । सत्त्वविद्ध रजश्चापि, सत्त्वविद्ध तमस्तथा, द्विजत्वमुत्पादयति क्षत्रिये,विशि चैव,हि , रजस तमसो विद्ध एवं चैवाऽल्पभागया, द्विजत्वमुत्पादयति गुण सत्त्वं हि ब्राह्मणे । विसर्त्तव्य इदानीस्तु न एतत्—त्रिगुणेष्वपि, नैक कश्चित् स्वरूपेणास्ति उत्तमोऽधम एव वा , अवस्थाभेदतश्चापि, प्रयोगस्य च भेदत ,य कोऽपि दूषण कुर्यात् , य कोऽपि ननु भूषण । रजोऽधिक स्मृतो ब्रह्मा, विष्णु सत्त्वाधिक स्मृत , तमोऽधिक शिवश्चापि , यतश्चापि महेश्वर । "सत्त्व ज्ञान, रज कर्म, तम इच्छा (अज्ञान) इहोच्यते" (म०) । एकयोरेव विप्रोस्तु जायते विविधा प्रजा , चत्वारोऽपि यथा वर्णा गिराद्द्विजयोर्मनु, (९००) रजोऽधिका ,तम प्राया ,चापि सत्त्ववतो प्रजा ,एव सत्त्वाधिकाश्च एव अन्यथोऽपि, क्वचित् कश्चित् । "अमैथुना प्रजा पूर्वं , न ता ववृधिरे , तदा मैथुन्य असृजद् ब्रह्मा , प्रजा ववृधिरे तत , वैचित्र्य चाभवत् तासा"—पुराणे चित्रादि पठ्यते । यत्र न व्यभिचारस्य शंका काचित् मनाग् अपि , पति पत्नीव्रती यत्र, पत्नी चापि पतिव्रता, परस्परं भृशा रक्तौ, परस्पर अनुव्रतौ, तत्रापि भाव भेदेन, सर्गे सर्गे, ऋतौ ऋतौ, जायंते एव प्रत्यक्ष भिन्नप्रकृतय सुता , केचित्तु सदृशा मातु कश्चित् सदृशा पितु , (यतो गाथा प्रवृत्ता इय, "पुत्रो मातृमुख शुभ , तथा पितृमुखी कन्या", प्रेमाऽधिक्यस्य सूचनात् ), उभयोर्विसदृशा केचित, विसदृशाश्च परस्पर । (९०७ श्लो०, २ अध्याये ४९० श्लोका: ) ।

## ३ अध्यायः

### कामशास्त्रस्य भ्रंशः ।

अन्यश्च वर्त्तते हेतुर् वैरस्ये पितृपत्न्योः । यद्दु अन्यशास्त्रवद् भ्रष्टं कामशास्त्रं; ततोऽधिकं अपि ; यत् पामरं जातं लोकशास्त्रायतोऽधुना । गार्हस्थ्यस्य हि तच्छास्त्रं दाम्पत्यस्य उत्तमस्य च, वस्तु-पटिकलानां च, गृहोपकरणस्य च, उद्यानानां कृषीणां च, सत्यस्यार्थस्य चैव हि, सौन्दर्यस्य अगाद्गुणस्य स्त्रियाः पुंसः तथैव च, उत्कृष्ट-सन्ततेश्चापि, रति-प्रीति-विवर्धकं; तत् शिष्यतेऽधुना नूनं मैथुनायैव केवलं; पशूनां अनुकारेण शास्ति चित्ररतानि च, चत्वारि चापि अशीतिश्च, योगासनविवर्त्ततः । ईदृशाद् अनुरागात् तु पशूनां, खलु, संगमे, भावोऽपि तादृशो भावी, तादृशी च प्रजा ध्रुवं । अतः एव हि दृश्यंते बहवः पशुवज् जनाः, कुबुद्धय , कुरूपाश्चापि, अथ किं,पशुवत्गुरवः, काम-क्रोध-भय-अमर्ष-तर्ष मोह-मदैर्भृताः, राजसास्तामसा-श्चापि; सात्त्विकास्तु क्वचित् क्वचित् । स्त्रीपुंसयोर्विवाहस्तु तदैव भविता उत्तमः, यदा न केवलं तत्र मिथुनं स्थूलदेहयोः, अन्योऽन्यऽश्लेषणं, किन्तु, सूक्ष्मयोरपि वर्ष्मणोः (१०) । सूक्ष्मयोरेव हि श्लेषः सम्बन्धे गुरु-शिष्ययोः । प्रीतिर्हि लक्षणं, चित्तमेलनरूपास्ति सुस्फुटं । अतो वैवाहिको मंत्रः, औपनायनिकस्तथा, एकः एवाऽस्ति,शब्दस्य भेदेन एकस्य एव हि; "मम व्रते ते हृदयं दधामि, मम चित्तं अनु चित्तं तेऽस्तु,मम वाचमेकमनाः शृणुष्व,बृहस्पतिस्त्वा नियुनक्ति मह्यं"(वे०); प्रबंधे तु मंत्रोऽयं विवाहे परिवर्त्यते, पादे चतुर्थे, यत्, स्थाने देवऽाद्देष्टुः बृहस्पतेः, आहूयते प्रार्थ्यते च 'प्रजानां' जनकः 'पतिः' । पिता चापि,गुरुश्चापि,बाले स्वस्या-न्तिके तु यद् आत्तो रक्षति कालं तु कश्चित्, तद् गर्भधारणं, यथा मातुः स्थूलदेहे, तथा सूक्ष्मे तयोरपि । ग्रन्थस्यापि नवीनस्य कर्त्तु र्मस्तिष्के एव हि,पूर्वमाधीयते बीजं संयोगेन केनचित्,ग्रन्थस्य हृदयं तत् च,तत्त्वं, सारं च,मर्म च; बहुकालं रक्ष्यते च, पच्यते च प्रयत्नतः,परिष्कृत्य ततश्चायं साङ्गोपाङ्गः प्रकाश्यते; एवं विचारजातस्य जनन, चित्तदेहतः सूक्ष्मात्, ऊर्ध्वं गतेः पुष्टाद् रेतोभिर् ध्यानवेगतः । कामशास्त्रेः परिणति- उत्तमा एतादृशी मता (२०)। काम-शास्त्रीय-कामस्तु केवलं न हि मैथुनं; ज्ञानेन्द्रियाणां पंचानां विषयाः ये परिष्कृताः, ललितास्वादनं तेषां कामः सर्वोऽपि सात्त्विकः ; सूर्योदयाऽस्तौ, सरितः, "आपो ज्योती रसोऽमृतं" (वे०), महीधराणां माहात्म्यं आश्चर्यं गौरवं गुरु, शोभा समुद्रवेलायाः,ताराऽञ्चितं नभो महत् ,पुष्पो-

द्रुमो वसन्ते च, वृक्षा बहुफलअनता, साम-गान विहगानां उष काले मधुम्वन, शीत-मन्द सुगन्धस्य समीरस्य निषेवण, पान 'अमृतवर्षस्य' मुहूर्तेक तदैव हि— एतेषां रमन सर्वं उत्कृष्ट० काम एव हि। प्रकृते सुषमा सन्ध्याकाले पुण्ये विलो क्यते,या ऊर्जस्वल विराड्रूप ऐश परमभास्वर—तारका चिति 'भस्म' अस्मिन्, व्योम श्याम 'गजाजिन', आकाशगंगा 'गंगे व, 'भाले' प्रत्यक्षचन्द्रमा ,'भुजगा' वेष्टितास्तथ ग्रहनक्षत्रतारका लेख्टा, येवा भ्रमिश्चापि नित्य कुंडलिनीगति , चन्द्र तारामयी ज्योत्स्ना राम्या, भास्करभा दिने, सर्वप्राणमयी 'देवा' शक्तिर्धांगिनी सदा, सर्वेषां 'ब्रह्मणो अडामा' सचित्री 'भ्रामयित्री' अपि, माया चाप्यात्मनोंऽशाना जीवाना 'भ्रम'कारिणी (२०)। 'उत त्व पश्यन् न ददर्श वाच,उत त्व शृण्वन् न शृणोति एना,उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा । चित्र देवाना उदगाद् अनीक चक्षुर्मित्रस्य वरुणस्याग्ने , आ प्रा द्यावापृथिवी अंतरिक्ष, सूर्य आत्मा जगतस्तस्थुषश्च। विश्वाहा त्वा सुमनस सुचक्षस , प्रजावन्तो अनमीवा अनागस , उद्यन्त त्वा मित्र महो दिवेदिवे, ज्योग्जीवा , प्रतिपश्येम सूर्य'' (वे०)। "विशेषस्तस्य देहोऽय स्थविष्ठश्च स्थवीयसा,यत्रेद दृश्यते विश्व भूतं भव्य भवच्च सत्, द्यौर् अक्षिणी, चक्षुर् अभूत् पतग , पक्ष्माणि विष्णोर् अहनी उभे च,× हासो जनोन्मादकरी च माया, दुरन्तसर्गो यदपांगमोक्ष , व्रीडा उत्तरोष्ठो,ऽधर एव लोभो, धर्म स्तनो,ऽधर्मपथोऽस्य पृष्ठ,× प्राणोऽस्य गन्धो, मुख अग्निरिद्धो,× कुक्षि समुद्रो, गिरयोऽस्थिसंघा , नद्यो ऽस्य नाड्यो, ऽथ तनूरुहाणि महीरुहा विश्वतनोर् नृपेन्द्र , अनन्तवीर्य श्वसन मातरिश्वा , गतिर् वय कर्मगुणप्रवाह , ईशस्य केशान् विदुर् अम्बुवाहान्,वाससतु सन्ध्या अमला च भूम्न "(भा०)।(२७)।

शिवस्य' उपासना याऽस्मात्, शक्तेरपि तथैव या, उत्तमा, 'दक्षिणा, सा हि 'वाम'मार्गेषु पालिता। महादेवा,महामाया,महाविद्या,महेश्वरी,महामाता च जगता, शक्तिश्चिन्मयरूपिणी,ज्ञान इच्छा-कर्म-शक्ति सा कर्तुं शक्नोति चार्ऽखिलं; पुरुषोत्तमश्च पुरुष ,सर्वभूतअवायस्थित ,परेषु सु शेते य ,सर्वकल्याणकारक ,सर्वज्ञ ,सर्वकामश्च सर्वसंकल्पवस्तथा,व्यापको,व्योम पर्यायव्योमकेशा विभु प्रभु एतयो शिवशक्त्योर्या उपासना चित्तपावनी,शान्तिदा चापि ससारयात्राया , मोक्षदाऽपि या,शंसिता सम्य भाग् साद्यं,प्रशित्त कल्पसेषु यै,नकुलीशादिभिर्वाममतप्रचारप्रवर्तकै । "तथा ते सौन्दर्य, परमशिवदृङ्मात्रविषय, कथंकारं ब्रूम , सकलनिगमअगोचरगुणे ।"

"वाग अर्थी इव सम्पृक्तौ पार्वती परमेश्वरौ", न पूज्येते शुद्धचित्ते, पूज्येते योनि लिंगकौ, कामप्रमभि दुष्टचित्ते सर्वसम्स्कारवै। मायाया एव नियतिर् ईदृग् द्वद्वमयो सदा, विद्याया पूर्वरूप तु, सूर्यस्य उषा यथा, तथा अविद्या एव भवेत् पूर्व, पश्चाद्विद्या प्रवर्तते, 'पूर्वदेवा' स्मृता दैत्या, 'असुरा, अभवन् पुरा, ते एव पश्चात् सजाता, 'सुरा,' नाम्ना इदाऽपि च। ऊर्ध्व नाभेस्तु पुरुषो मेध्यो, ऽमेध्यो नाभेरधम् तथा, विराटपुरुषनाभ्यूर्ध्व लोका सह स्थिता, तथा सह अध खलु पाताला तस्य नाभे निवेशिता त्रिभुवन चापि, इद्वानि निरिग्गानि च, मनुष्य देहे विष्टानि दृश्यते सूक्ष्मदर्शिभि (५०)। प्रत्यक्ष एव चक्रोऽय, मर अकान् सतो मल सवयाहि मनुष्याणा उदरे इयम् एव हि, नाभेरूर्ध्व दुग्धपान, अधोऽन्ते मल सचय। सर्वेषु सम्प्रदायेषु बौद्धे, जैने च, क्रिश्चने, मुहम्मदाये जर्दुस्त-पारसीके, यहूदके शिन्तो नाम्नि, तथा क ्फुन्स्य के, लौ-त्साभिधे तथा, सिक्ख, वाल्लभ चैतन्य माध्व लिंगायतेषु च, अवान्तरेषु चैतेषां मतेषु च पथेषु च, एतादृशो हि अध पात, स्वल्पो वाप्यधिकोऽथवा, पुण्याद् दक्षिणभागात् तु वामे व्यसनमेव हि, जैह्म ध्यौपरम्य मये प्राय सर्वत्रैव हि दृश्यते। 'गुह्य-समाज-तन्त्रे' तु, 'वज्र-यान' अपर ाभिधे, शुद्धो बुद्धोपदेशोऽपि पापिष्ठैर्विनिपातित, माता स्वसा दुहिता वा मैथुन यत्र यानिभि न वर्ज्यते 'म कारणा पचक मन्यतेऽखिल, वामशास्त्रैर्यथा, (पूर्वं एषा मार्गास्तु वर्णित)।' त्रिविध नरकस्येद द्वार नाशनमात्मन, काम क्रोधस्तथा लोभ, तस्माद् एतत् त्रय त्यजेत्' (गी०) (६०) योषार्थ च, धनार्थ च, दर्पाद् च, कलहा सदा जायते हि मनुष्याणा, एषणात्रयकारिता, स्वार्थिनो, दाम्भिका, मिथ्याधर्म ाभास प्रवर्तका, धनसम्पत्तिलुब्धाश्च, लम्पटा, व्यभिचारिण परदाररताश्चापि, कुमारीदूषका अपि, प्रवर्तयति घोरास्तान् मकारान्' पंच याम् विदु। 'देवा अकुर्वन् यत् किंचित् तद्, अभिद्रुत्य, पाप्मना अविध्यन्, खलु दैत्यास' ते, (उप०) पूर्वे देवा हि येऽभवन् पूर्वकल्पे, तथा चास्मिन् देवानां भ्रातरो हि ते वैमात्रा, कश्यपसुता, अदितेश्च दितेरपि "वाहिनी उभयतो हि इयं नाम चित्तनदी सदा, पापाय वहन्त्येषा, कल्याणाय च पूरुष" (यो० भा०), पाप पुण्य उभके च उभे सघृष्येते हि वासने, नियमेव, मनुष्यस्य, विद्वान् जयति पापिका। सुर असुरकृते हि अब्धिमंथने, मार्धकालिके, वारुणी चापि दुर्जाता, क्षणैकसुखदायिनी पूर्व, सतापिनी पश्चात्, सुजाताऽस्य स्पर्धा सुधा, शाश्वतअनन्दद्, चित्ततोषिणी,

देहपोषिणी, (७०), सुरा अविद्वान् गृह्णाति, सुधा वै विज्ञपूरुष, क्षीरोदधेः समुत्पन्ना प्राय क्षीरमयी तु या। एकस्य सम्प्रदायस्य मन्दिरेषु मठेषु च, कालेन महती ऋद्धिर् यदा भवति वर्धिता, तदा भवति साऽन्येषां ईर्ष्यायास्तु विवर्धिनी, उत्तिष्ठते सम्प्रदाय तदाऽन्यो 'धर्म'-नामतः। 'वैदिकानां' तु सम्पत्तिं अमुष्णन् 'भिक्षव' क्रमात्, पूर्वं प्रलोभनैर् व्याजैः, बौद्धराजबलैस्ततः, समचिन्वन् 'विहारेषु' ता, गुहासु शिलासितु, तल्लोभाद् अन्यराजानः 'वीरशैवा' तदाऽभवन्, कुर्वन्तो 'धार्मिक' व्याज उपाय धनसाधने, विहाराश्चापि अवऽस्कन्दन्, भिक्षून् अघ्नन् तथा बहून्, रत्नानि सञ्चितानि नृपाः, आमाशयेनापि अमोषिषु, भिक्षवो हततोषा ये तेऽन्यदेशान् पलायिता। 'हिन्दूराज्ये पुन पश्चात्, मन्दिरेषु महर्धय, राज्ञा कोषेषु अपि तथा, समचीयन्त भूरिशः, व्यवर्धन्तापि बहुश "कामजो दशको गण", आयामस् तास् तदा भूय पर्यायेण हि 'मुस्लिमा', हिन्दू 'धर्म धरा' चापि बहवस्तैर् निपीडिता, देवालयाश्च शतशो लुण्ठिता नाशिता अपि, (८०), अजनिषत 'विहाराश्च' 'भिक्षव'श्चाप्युपद्रुता, तिब्बतादीनन्य देशान् भिक्षवो बहु विद्रुता, हिन्दू 'धर्मधरा' किन्तु निरुत्साहाश्च भीरव, मुस्लिमशासना हि ऋयत्य पेतस्तोऽपूषितो गता। मुस्लिमाश्च क्रमेणैव यूरोपीया हि क्रिस्चना अवर्धन्त स्म सर्वत्रापि आरम्भादेव भूरिश, प्रतिस्पर्धितया कसु अन्यास्तु स्वानुयायिन। क्रिस्चनानां सम्प्रदायास् चायुध्यन्त परस्परं, 'रोमन् काथलिकाद् चापि, प्राटिस्टेन्ग' तथैव च, अन्योऽन्यं बहुवर्षेषु पशुमारं अमारयन्, 'रोमन् पापल्इश'स्तत्राभूवन् क्रूरतरास्तमाम्। 'रोमन्' धर्मधरैश्चापि 'महाधीशैश्च' 'पाद्रिभि', सम्पत्तयो महत्यो या, चलाश्चाप्यचला अपि, सञ्चिता बहुकालेन, स्वभोगाय, न च हृष्यै, (='यज्ञाय', परोपकाराय), जगृहुस् 'चर्च'-शब्दीर् ता, बलाद्, विप्लवकारिणः, प्राग्देशे च, रूसे च, स्पेनेऽन्यासु अपि भूमिषु। (९०)। जमदग्ने, तत्सुतस्य च, अर्जुनेन तु योऽभवत्, विश्वामित्रेण चेचापि वसिष्ठस्य ■ योऽभवत्, प्रजाविनाशको घोरो युद्धो वै बहुवार्षिक, गो, अर्थात् कृष्यभूमेस्तु, लोभोऽभूत् तत्र कारणं, भूमिरेव हि विस्पष्ट सर्वसम्पद्दुघा सदा। कामो नामस्वभावश्च, वाम मार्गं प्रवर्तक, लोभेन पोषितो भ्राता ज्येष्ठेन, अतृप्यता, भृशं, पर्यायेण वर्धयति स्वानुजौ क्रोधमत्सरौ।

सात्त्विकयुवमनास्तु उक्त पूर्वं यद् रमन शुचि, सौन्दर्यस्य महादेव्याः प्रवृत्ते पर-

मात्मनः, सर्वमेतत्तु कामस्य 'सामान्यो' विषयः स्मृतः, मनःषष्ठेन्द्रियाणां हि, 'विशेषो', मैथुनं तथा। वेदा वदन्ति पुरुषं सर्वं काममयं किल; 'मायाया' एव नामैतद् अपरं 'काम' इत्यपि, अपि "काममयोऽयं हि पुरुषो" ननु सर्वथा (वे०); "पंचेन्द्रियाणां, मनसा ऽधिष्ठितानां, स्वके स्वके विषये हि अनुकूला या प्रवृत्तिः, कामस्त्व सा, अभिमानिकरूपेण याऽनुविद्धा सुखेन तु विशेषे स्पर्शविषये प्रतीतिः, फलवती अपि, प्राधान्याद् अथ वैशेष्यात् सा 'काम' इति कथ्यते"(वा०काम०सू०)। (१००)। "कामात्मता न प्रशस्ता, न चैवेहास्ति अकामता, यद्यद् हि कुरुते किंचित् तत्तत् कामस्य चेष्टितं, काम्यो हि वेदाधिगमः, कर्मयोगश्च वैदिकः, (९०), अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्"(म०), धर्मकामा, अर्थकामा, कामकामास्तथैव च, अथ किं, मोक्षकामाश्च, अध्यात्मग्रन्थेषु वर्णिताः, "धर्माविरुद्धः कामोऽस्मि भूतानां भरतर्षभ"(गी०)। सायं प्रातर् द्विजातीनां सन्ध्योपासनमस्ति यत्, जलाशयसमीपे च, तत् कामोत्तमसाधनं, ज्योतिषोऽपां च सत्सर्गे "आपो ज्योती रसोऽमृतं", क्रियन्ते क्रियते सम्प्रति, एतदुद्देश्यतश्च, तत्? ईदृशी कामशास्त्रस्य दुर्दशा दृश्यते ऽधुना, धर्मार्थमोक्षशास्त्राणां विकृतिश्चापि तादृशी।

धर्मशास्त्रदुर्दशा।

बाह्याडम्बरमात्रो हि 'धर्मो'ऽधुना ऽवशिष्यते, वर्णितं हि यथा पूर्वं, 'दम्भ-अहंकार' चित्रण। 'मुच्यते सर्वपापेभ्यो गंगास्नानेन केवलं', 'जपमात्रं हरेर्नाम्नः सर्वपापनिकृन्तनं', 'हरेर्नाम, हरेर्नाम, हरेर्नामैव केवलं, विनैव धर्माऽऽचरणं, सर्वपापप्रमोचनं', 'अपि ब्राह्मणनामभ्यो दानं, एकं, कलौ युगे, सर्वपापापनोदाय सर्वथैव अलं इष्यते', 'ऊर्ध्वपुंड्र त्रिपुंड्रादि तीर्थमृद् भस्म धारणं, रुद्राक्ष-तुलसीकाष्ठ मालानां परिवर्तनं, (१००), प्रणामैर्वाऽपि साष्टांगं मूर्तिषु, तीर्थमज्जनं, नितान्तमलयुक्तानां च तथाऽधमैर्नरैरपि तीर्थं नामक कुंडादि जलानां उग्रगन्धिनां, (आचामति स्वयं नैव यानि तीर्थपुरोहिताः), केवलं श्रद्धया भक्त्या—सर्वपापैः प्रमुच्यते', 'पिपीलिकाबिलान्तश्च शर्कराक्षेपणैस्तथा, सर्पाणां पूजनैः, तेभ्यो दुग्धदानैस्तथैव च, पाखंडैर्वानरादीनां परिक्रमणवन्दनैः, भूतप्रेतनिविष्टानां वस्तूनां अपि वाहनैः, ईदृशैः कर्मभिश्चान्यैः, पुण्यं तु बहु लभ्यते'—इत्यादि भावाः प्रचुरं देशेऽस्मिंस्तु प्रचारिताः कुटिलैः, सरलैश्चापि, विपर्यस्तानां तु हेतवः। सरला विप्रलभ्यन्ते एवं तु कुटिलैर्भृशं, प्रतारिताश्च सरलाः नयन्ति अन्यांश्च तत्पथे। "स्त्रियः कामितकामिन्यः, मूर्खाः पूजित-

पूजका, गतानुगतिको लोको, न लोक पारमार्थिक" (म०भा०)। अन्यथा चापि तैर्भावैः क्रियते पापमर्षणं, सर्वपापनिवृत्तिश्चेत् स्नानाद्यैरेव केवल, कस्माज् जनो न कुर्याद् हि पाप यत् सुखदायक ? (११०)। स्नानेनैव तु गगाया, हरि नामजपेन वा, 'शूद्र' कि 'ब्राह्मण' हत्वा, सर्वपापाद् विमोक्ष्यते ? कोऽपि, एतद्, ब्राह्मणमन्य कि, कदापि, अनुमस्यते ? "आत्मा नदी, सयमपुण्यतीर्था, सत्योदका, शीलतटा, दयोर्मि, तत्राभिषेक कुरु, पाण्डुपुत्र !, न वारिणा शुध्यति हि अन्तरात्मा"(म०भा०), गगायां मज्जनं हि एव सर्वपापहर यदि, जीवन्मुक्ता सदा मत्स्याः स्युः ते मत्स्य कुम्भीर कच्छपा। नैतादृशो महर्षीणा आशयस्तु कदाचन। "भोगाद् एव क्षयो भावी, प्रारब्धाना तु कर्मणा", "न अभुक्त क्षीयते कर्म, शुभ वा यदि वा अशुभ", "न अधर्मश् चरितो, लोके, सद्य फलति, गौर् इव, शनैर् आवर्तमानस् तु, कर्तुर् मूलानि कृन्तति" (मनु), इत्येव हि पुराणाना महर्षीणा विनिर्णय । "फल पापस्य नेच्छन्ति, पाप कुर्वन्ति यत्नत, पुण्यस्य फलमिच्छन्ति, पुण्य नेच्छन्ति जनाः"। गुणाना फल ईर्ष्यन्ति, हेतुभूतान् न तान् गुणान् ईर्ष्यन्ति, यत, दैवेया, दुर्बुध्या विधिना हता । "श्रूयता धर्मसर्वस्व, श्रुत्वा चैव अवधार्यता, आत्मन प्रतिकूलानि परेषा न समाचरेत् ,(१२०), यदन्यैर्विहित नेच्छेदात्मन कर्म पूरुष, न तत्परेषु कुर्वीत जानन् अप्रिय आत्मन, अपत्रपेत वा येन न तत् कुर्यात् कथ चन, यद्यद् आत्मन इच्छेत तत्परस्यापि चिन्तयेत्" (म०,म०भा०), "धृति क्षमा दमोऽस्तेय शौच इन्द्रियनिग्रह धी विद्या सत्य अक्रोधो, दशक धर्मलक्षण, अहिंसा सत्य अस्तेय शौच इंद्रियनिग्रह, एत सामासिक धर्म चातुर्वर्ण्य अब्रवीन् मनु" (म०), "आत्मौपम्येन सर्वत्र सम पश्यति योऽर्जुन, सुख वा यदि वा दुःख, स योगी परमो मत "(गी०), "तीर्थस्नानै तपोभिर्वा भावदुष्टो न शुध्यति, श्व इति क्षालिता तीर्थे कि शुद्धि अधिगच्छति ? आजन्म तीर्थेषु वसति मत्स्या, देवालये पक्षिगणाश्च नित्य, भावोज्झितास्ते न फल लभते, तीर्थावगाहाश्च तथैव दानात्", "ईश्वरैरपि भोक्तव्य कृत कर्म शुभाशुभ", "प्रारब्धाना कर्मणा तु भोगादेव क्षयो भवेत्", "स्वधर्मकर्मविमुखा कृष्ण-कृष्ण इति रावित, ते हरेर् द्वेषिणो मूढा धर्मार्थं जन्म यत् हरे" (विष्णु पु०), "श्रुति-स्मृती मम एव आज्ञे, यस् ते उल्लंघ्य वर्तते, आज्ञाच्छेदी, मम द्रोही, मद्भक्तोऽपि न वैष्णव (भा०) (१३०), "देवर्षे ! विहिता शास्त्रे, हरिं उद्दिश्य, या क्रिया, सा एव भक्तिर् इति प्रोक्ता,

तथा भक्ति परा भवेत्" (नारद-पाञ्चरात्र), नून भक्तौ गुणा सन्ति, नाम्नश्चापि जपे गुणा, स्व धर्म कर्म हानौ तु, तौ दम्भो हि एव केवल । "अर्चायां एव हरये पूजा य श्रद्धया ईहते, न तद् भक्तेषु चान्येषु, स भक्त· प्राकृत स्मृत, ईश्वरे, तदधीनेषु, बालिशेषु, द्विषत्सु च, प्रेम मैत्री-कृपा उपेक्षा य करोति स मध्यम', सर्वभूतेषु य पश्येद् भगवद्भाव आत्मन, भूतानि भगवति आत्मनि, असौ भागवतोत्तम "(भा०), "मैत्री दया मुदा उपेक्षा भावनाभि ,यथाक्रम, सुख-दु ख पुण्य पाप विषयेषु, निरन्तर,चित्तप्रसादनं"साध्य, भक्तेन च मुमुक्षुणा (योगसूत्र) "यमो वैवस्वतो देवो, य· तव एष हृदि स्थित , तेन चेद् अविवाद ते, मा गगा मा कुरून् गम " ( म०, म० भा० ) ।,"अप्सु देवा मनुष्याणा, दिवि देवा मनीषिणां, बालाना काष्ठलोष्टेषु, बुधस्यआत्मनि देवता, शिवं आत्मनि पश्यति, प्रतिमासु न योगिन , आत्मस्थ ये न पश्यति, तीर्थे मार्गन्ति ते शिव, उत्तमा सहजाऽवस्था, द्वितीया ध्यान धारणा, तृतीया प्रतिमा पूजा, होमयात्रा ततोऽधमा ' ( अग्नि पु० ) । ( १४० ) । नून मृत्क्रीडनेषु एव बालस्यास्ति मनोगति, न ग्रथेषु अधिकारोऽस्ति , "धर्मो हि आवस्थिकः स्मृत " ( म० भा० ) , किंतु मस्तिष्को न सर्व इच्छतो—'नो सुत सदा बाल एव भवेत्, न एव आमृत्यु पर्यंत विधया' । "माता शत्रु , पिता वैरी, येन बालो न पाठ्यते ', काष्ठलोष्टेषु तत्र सत्त क्रियते चाधिकाधिक, यथाद्य जनता, भाग्यहीने देशे तु, याजकै । नून स्नाने गुणा सति देहशुध्यादिका बहु , यात्रासु अपि तथा ज्ञान-वृद्धिर्, देशाटने कृता, पुर ग्राम-नद-अरण्य पर्वत उदधि दर्शने , विविधाना मनुष्याणा चर्याणां चावलोकने , संस्कारश्चापि चित्तस्य, विकासश्च, विनोदन, अर्चायां 'दिवि देवानां' व्याजेन, स्याच्च शिक्षण ज्योति शास्त्रस्य तत्त्वानां, ग्रहणावसरेषु च, देवअर्च्यानां मूर्तीनां—स्वच्छाश्रेत् सुभ्र, शोभना —कलाकुशलताऽस्वादो, ह्लादो, विस्मय , एष च, सद् अभ्यासेन चैवापि धारणा-ध्यान-योग्यता, महती बुद्धिवृद्धिश्च, स्थापेत यदि, मन्दिरे, रूपकाणां, पुराणेषु वर्णितानां पदे पदे, प्रतीकानां च, गूढार्थों—यथोक्त ऋषिभि पुरा (१५०)—" 'कौस्तुभ'-व्यपदेशेन स्वात्मज्योति बिभर्ति अज', तत्प्रभा व्यापिनी साक्षात् 'श्रीवत्स' उरसा विभु , स्व-मायां 'वनमाला'ख्यां नानागुणमयीं दधत्, 'वास ' छन्दोमयं 'पीत', 'ब्रह्म सूत्र' त्रिवृत्-स्वरं, बिभर्ति सांख्य योगं च देवो 'मकरकुण्डले', 'मौलिं' पदं

पारमेश्र सर्वलोकाभयकर; अव्याकृत 'अनत'आख्य आसनं यदधिष्ठित , धर्मज्ञानादिभि युक्त सत्त्व 'पद्म' इह उच्यते, ओज -सहो-बल युत मुख्यतत्त्व 'गदा' दधत्, अपा तत्त्व 'दरवर'; तेजस्तत्त्व 'सुदर्शन , नभोनिभ नभस्तत्त्व 'असि'; 'चर्म' तपोमय, कालरूप 'धनु शार्ङ्ग , तथा कर्ममय 'इषुधि', इन्द्रियाणि 'शरान्' आहु , आकूती अस्य 'स्यन्दन , तन्मात्राणि अस्याभिव्यक्ति, 'मुद्रया'ऽर्थक्रिया आत्मता, 'मडल' देवयजन दीक्षासस्कार आत्मन', 'परिचर्या' भगवत आत्मनो दुरितक्षय , भगवान् भग शब्दार्थ 'लीलाकमल' उद्वहन् धर्म यशश्च भगवान् 'चामरव्यजने' अभजत्, 'आतपत्र' तु वैकुठ, 'द्विजा ' (त्रय्या ) धाम अकुतोभय, (९६०), त्रिवृद्वेद' 'सुपर्णाख्य' 'यज्ञ' वहति पूरुष अनपायिनी 'भगवती श्री साक्षाद् आत्मनो हरे ,'विष्वक्सेन ' तन्त्रमूर्ति विदित 'पार्षदाधिप ', 'नन्दादयोऽष्टौ द्वा स्थाश्च' तेऽणिमाद्या हरेर्गुणा , 'वासुदेव , सकर्षण , प्रद्युम्न ,' पुरुष स्वय,'अनिरुद्ध ' इति, ब्रह्मन् ', मूर्तिव्यूहोऽभिधीयते, स विश्व , तैजस , प्राज्ञ तुरीय , इति वृत्तिभि , एक एव हि लोकाना सूर्य आत्मात्मदिक्कृद् हरि ( भा० स्क० १२ )। "यदाहु 'वासुदेव'आख्य 'चित्त' तन् महदात्मकं अहकार ' च त्रिविध , सहस्रशिरस ( विभु ) 'सकर्षण आख्य पुरुष य 'अनन्त' प्रचक्षते ('मनो' 'अनिरुद्ध' , 'प्रद्युम्न "कामो 'बुद्धि' स्तथैव च) ' (,, ३) । महाय एतादृशार्थं ,जनताशिक्षणाय वै,बुद्ध्युत्कर्षाय चैवापि 'बालाना', रुचिरं क्रम , मूर्त्तिदर्शन-यात्रादि-स्नानादि किल कार्यते मैवीप्रपातमन् किंतु, मन्त्रमाहाय केवल, 'रौप्य स्थापय मूर्त्यग्र, पुष्प किर, जल क्षिप, क्षिप्र परिक्रमा कृत्वा गच्छ इत्येवोपदिश्यते । ईदृशी धर्मशास्त्रस्य धर्मस्यापि च दुर्दशा, नि श्रेयस चाभ्युदय तत् कथ साधयिष्यति ? (१००) ।

अर्थशास्त्रदुर्दशा ।

विलुप्त त्वार्थशास्त्र प्रायो ऽद्यत्वे न लभ्यते, कौटलीय'अर्थशास्त्र' न शास्ति खलु'जीविका 'का का ,प्रजाभि काभिश्च,साधनीया ,कथं कथं प्राप्यस्तस्य लक्ष्य [redacted] राजकोपचिवर्धन, न प्रजाभ्यस्तु सर्वाभ्यो सद्वृत्तीना प्रबोधनं । आदिष्ट मनुना स्पष्ट विषयेऽस्मिन् पुन पुन —"सर्वेषा ब्राह्मणो विद्याद् वृत्युपायान् , यथाविधि, प्रब्रूयाद् इतरेभ्यश्च, स्वय चैव तथा भवेत्" (म०) वर्णाना वृत्तयश्चापि आदिष्टा स्तेन चतुर्विधा , षट् कर्मणा [redacted] विप्रस्य "त्रीणि कर्माणि जीविका, अध्यापन याजन

च, विशुद्धाच्च प्रतिग्रह, शस्त्रास्त्रभृत्त्व क्षत्रस्य, वणिक्पशुकृषिर्विश" (म०), "शिल्पानि, सेवा, शूद्रस्य, प्रभु, कर्म समादिशत्' (म० भा०)। सर्वेषां वृत्त्युपायान् के प्रयुञ्जन्ति अद्य 'ब्राह्मणा'? धनुर्वेद, तथा वार्त्ताशास्त्रं, वाणिज्य कृषिमपि, शास्त्र गो-माहिष अज अश्व हस्त्यादीना विदन्ति के? वस्त्र धान्य धातु रत्न शास्त्राणा केऽद्य पण्डिता? शिल्पा विविधशिल्पानि केऽद्य शिक्षयितु क्षमा? उक्त, "धिग् जीवित राज्ञो,राष्ट्रे यस्य अवसीदति द्विजो वा, अन्यो मनुष्यो वा" (म० भा०), प्रजाना वृत्तिकल्पन, भरण पोषण धर्म्य, नृप धर्मा विशेषत, (१८०), साम्प्रत क्षत्रियम्मन्या वनि ज्व कुर्वते 'नृपा'? स्व गोप्तृ पा शु न भाम, दुर्विलासार्थमेव च। "विद्या विवादाय, धन मदाय, शक्ति परेषा परि पीडनाय, खलस्य, साधो विपरीत एतत्, ज्ञानाय,दानाय च, रक्षणाय", विप्रस्य, वैश्यस्य च, क्षत्रियस्य, द्विजत्रयस्य सम्मत तद् एव। बुभुक्षिता प्रजा सर्वा अर्थशास्त्रविलोपनात्। ईदृश अज्ञान सर्वशास्त्राणा अद्य दृश्यते।

मोक्षशास्त्रभ्रंश।

वेदस्य शास्त्र वेदान्त, मोक्षशास्त्र हि तत् स्मृत, त्रिवर्गसाधनाना तु वेदा नाना समापने, आश्रमक्रमतो हि, अन्ते, वेदान्त उपदिश्यते, चतुर्थाश्रम योग्योप, चतुर्थार्थस्य साधन, चतुर्थ पुरुषार्थ त आहु 'नि श्रेयस' बुधा। यद्यर्थे, सारगर्भैश्च, मितैर, उपनिषत्पदै, विरक्तजनसेव्यैश्च, न जरत्क विनष्टिभि, प्रशा न्तचित्तैः ऋषिभि. वेदान्त उपदिश्यते। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणम् तु निर्वेद आयात्, नास्ति अकृत कृतेन, तद्विज्ञानार्थं स गुरु एव अभिगच्छेत्, समित्पाणि श्रोत्रिय ब्रह्मनिष्ठ (१९०), तस्मै, स विद्वान्, उपसन्नाय सम्यक् प्रशान्तचित्ताय, शमान्विताय यया अक्षर पुरुष वेद सत्य, प्रोवाच ता तत्त्वतो, ब्रह्मविद्या" (मुण्ड उ०)। वेदान्तिना सदा भाव्य अतिवादतितिक्षुणा, वाच विलापयेत् नैव, न विमृशात् निगृह्य च, भद्र भद्र इति ब्रूयात् वेदान्ती त्रिवादिन, सम्वाद एव चान्विच्छेत्, सवादसमन्वय, शम वाक्कलहाना च, न तु तेषा विजृम्भण, ईदृशी वेदमर्यादा!, कथ सा पाल्यतेऽधुना? तेषा एव हि सूत्राणा भाष्याणि द्वि त्रि धा अष्टधा, महावाक्यपदाना च, उपनिषद्वचसा तथा, कृतानि यावदूकैस्तु वक्तुजरपवितण्डिभि, ईर्ष्यासक्तै, अहकार प्रेरितै द्वेषदूषितै, अन्योऽन्यखण्डने रतै, न विरतै कथचन, विकराला, महाकाया, सद्भिरक्त भय

दरा·, जिज्ञासु-श्रावकाश्चापि, विरोधपरिवर्धका , अल्पार्था , बहुशब्दाश्च, जटिला दुर्गमास्तथा, अण्वयदृधिकटाकारा , ग्रन्थाश्च बहु निर्मिता । (२००) । 'शङ्कर-दिग्विजये' हि एव माधवेनास्ति वर्णित, कस्या वृद्धस्य कस्यापि विदुषो व्यास-रूपिण , शङ्करेण विवादोऽभूत् पिण्डदयिपया भृशं, सूत्र वस्या एक बहुधा निघ्नतो "द्विनाष्टक मासकलहो जजृम्भे" । अद्वैतेन, मण्डनस्य, प्रविष्ट शङ्करो, गृह, अन्य दा खलु अनाहृत , विवादे विजिगीषया । तेन अन्यत्वेन स्पृष्टु, स्वयं मन् यज्ञ-कर्मणि, मण्डनो विजसृति न अभ्यात , परयाक्षर, अवादीत, शङ्करश्चापि अमन्द' एव उवाच ह. उभौ परमविद्वांसौ, किन्तु क्रोधवश गतौ—" 'कुतो मुण्डी ?', 'आगलात् मुण्डी ?', 'पन्थास्ते पृच्छ्यते मया'; 'किं आह पन्था ?', 'त्वन्माता मुण्डा इत्याह तथैव हि', 'पन्थान त्व अपृच्छस् , त्वां पन्था प्रत्याह, मण्डन !', 'त्वन्माता इत्यत्र शब्दोऽय न मां ब्रूयाद, अपृच्छकं', 'अहो पीता किमु सुरा ?', नैव, श्वेता यत , स्मर' , 'किं त्व जानासि तद्वर्णं ?', 'अहं वर्णं , भवान् रस', 'कन्थां वहसि, दुर्बुद्धे !, गर्दभेनापि दुर्वहा, शिखायज्ञोपवीताभ्या कस्ते भारो भविष्यति ?','कन्था वहसि, दुर्बुद्धे !, तव पित्रापि दुर्वहा, शिखायज्ञोपवीताभ्या श्रुतेर्भारो भविष्यति',(२१०), 'त्यक्त्वा पाणिगृहीतीं स्वां, अशक्त परिरक्षणे, शिष्य-पुस्तकभारेच्छोः व्याख्याता ब्रह्मनिष्ठता', 'गुरुशुश्रूषणालस्यात् समावर्त्य गुरोः कुलात्, स्त्रिय शुश्रूषमाणस्य व्याख्याता कर्मनिष्ठता', 'स्थितोऽसि योषिता गर्भे, ताभिरेव विवर्धित , तासु, मूर्खतम !, स्त्रीषु, पशुवद् रमसे कथ ?'—इत्यादि अश्लील एवमनेक बहु अन्योऽन्याधिक्षेपन, धुर्यमीमांसकस्याथ वेदान्त्याचार्य-वर्ययो ! विशिष्टविदुषोर् एव शिष्टाचार परस्पर, मेमाश्रयो 'जगद्गुरौ ' मान्ययोर् 'विश्वबन्द्ययो ',ततोऽन्यदा मण्डनमिश्रपत्न्याऽप्यासीत् विवाद खलु शङ्करस्य, "न दिवा न निशि अपि च वाद्कथा विरराम, नैयमिककाल ऋते, अतिमत्सरतो मम अमलधियो दिवसाश्च सप्तदश चात्यगमन्"( श०दि० ) । महाङ्कृति मान् अन्य', 'साधलडन' कारक , आत्मान ईदृश वर्णयन् जयते नहि— "य साक्षात् कुरुते समाधिषु परब्रह्मप्रमोदार्णव, तामृद्धृत्य आमन च लभते य चान्यदुर्नरेश्वरान्", तामृद्धृत्य आमन च गणयन् ब्रह्माभिमादे मम ,,कृ क्यात् कष्टतरा हि अतोऽपि पतिता वेदान्तधारा-दुर्दशा !, क गाम्भीर्य महर्षीणां, धामस्य, चापि मार्दव, समाय मितभाषित्व !, क ईदृशी क्षुद्रताऽधमा, पाश्चात्त्व

च चापल्य स्वचातुर्य प्रदर्शन ? (२२०)। तर्कश्च, प्रतितर्कश्च, प्रश्नाश्च उत्तरणानि च, शङ्कास् तथा समाधान—सर्वं तत् सर्वथा उचित, बुद्धिवृद्धिकर, ज्ञानप्रतिष्ठापकमेव च, जिज्ञासा शान्तिभावेन चेत्, न जल्पवितण्डने। अधीतौ न्यायशास्त्रस्य जल्पन चानुमोद्यते, यथा यूना नियुद्धानि, ग्लान्यै च, व्यायाम च, परस्परमुग्राऽपि, न तिरस्करणाय तु। शकर अमर-वेशस्य कृतेस्तु कथयाऽप्यत।

त्रिगुणत्व पदार्थाना, त्रिगुणस्यानुसारत, कृष्णेन गीत गीताया, वैराग्य त्रिविध तथा, आलस्यजनित यत्तु तत् तामस उदाहृत, ईर्ष्या-क्रोध-स्वार्थनाश कृत यद् राजस तु तत्, दु सम्पत्संसारिकारण्यात् सात्त्विकं स्मृत, यथा रामस्य बाल्येऽपि, यथा बुद्धस्य यौवने, यथाऽर्जुनस्य रणसमहारे समुपस्थिते।

दाम्भिक खलु वैराग्य, वृद्धव्याघ्रस्य वै यथा, कथाया पंचतन्त्रेषु वर्णित, तत्तु वञ्चन। राज्ञा स्वदाश्च बहवो भवति यतिरूपिण। यत्तु वेदान्ति सन्यासिना कलौ ईदृशी कथा, तथा च साम्प्रते काले मोक्ष शास्त्रस्य दुर्दशा। (२३०)।

कथ सच्छास्त्रोद्धार ?, शास्त्राऽशास्त्रनिर्णेता क ?

नष्टभ्रष्टआगमोद्धार कथ खलु पुनर्भवेत् ? किं सत् च, किं असत्, शास्त्र, इति निर्णेष्यति इह क ? "तस्माच्छास्त्रं प्रमाण ते कार्याकार्यव्यवस्थितौ (गी०), श्लोकार्धमेतद् गीताया पुन पुनरनूद्यते धर्माधिकारिणश्चान्यै अपि धर्मोपदेशकै। तत्र एतत् तु विचार्यं स्यात् 'पण्डितेन' इह धीमता—कृष्णेन उद्दिश्य किं शास्त्र वाक्य एतद् उदीरित ? "सद् असद् विवेकिनी बुद्धि यदा यस्य, स पण्डित", अध्यात्मशास्त्र तच्छास्त्र इति पूर्वं प्रदर्शित। अन्यद् विवेचनीय च सूक्ष्म अत्र विवेकिना—अस्तु शास्त्र प्रमाण न कार्याकार्यव्यवस्थितौ, किन्तु किं न प्रमाणं स्यात् शास्त्राशास्त्रविनिर्णये ? मेधा एव, तत्र, "विदिताखिलशास्त्रसारा" (दु०स०), कुर्यात् प्रमां, न तु मुधाऽर्चितपुस्तभारा, बुद्धेर् अतो न गतिर्—इत्यपि बुद्धिसाध्य, बुद्धे प्रभुत्व इह नैव कदापि बाध्य। खण्डन तु विचारस्य विचारेणैव सम्भवेत्। न जातु जनयन्तीह शास्त्राणि पुरुष क्वचित्, पुरुषा एव शास्त्राणि सर्वेऽप्युत्पादयन्ति हि। पाश्चात्यैर् निर्मित शास्त्र अद्भुत बलवत् नव, येनाप्रतिहता तेषां गति खेऽपि स्थले जले, प्रभुत्वमपि सर्वेषु देशेषु पृथिवीतले। (२४०)। अपिजानन्त्वास्तु मन्वाना, परमात्मानधिष्ठिता, वय किं अवसीदामो हस्तपादादिसंयुता, कतिचित् पुस्तिकादासा 'शास्त्र शास्त्रे'ति-राविण ? वेदो मान्य, 'कुरानो' वा, 'बैबलो'

वा, इति सदाये, ऋते तु बुद्धि आत्मीया क प्रभूयाद् विनिर्णये ? सर्वे ते स्व स्व एव इह सर्वश्रेष्ठ वदति हि, क तन्मध्ये शाश्विकाको, मनीषा मानवी ऋते ? अय मान्यो, न मान्योऽन्य, इत्येवमपि निश्चिते, वाक्य अत्रस्थ एतत्तु प्रक्षिप्त, विकृत तु वा, मौलिक वापि, शुद्ध वा—इति प्रश्न समुपस्थिते, सन्दिहाने जने भूय, उत्तर क प्रदास्यति, विना बुद्धिमता बुद्धि पक्षद्वयविवेचिनी ? पाठोऽय मौलिक, शुद्धो, अपि इत्येव निर्णये कृते, वाक्यस्य अस्य अवमेवार्थो, अन्योऽर्थो वा सम्भवेद्, इति संशयाने जने भूरि, कस्तमर्थं विनिर्णयेत् ? स्पष्टमेव प्रमाकर्त्री बुद्धिरेवात्र सिद्धिदा। "व्याख्या बुद्धिबलापेक्षा", बुद्धि नात्येति कश्चन, स्वीयां छाया यथा नैव कोऽपि लघयितु क्षम। "यस्य नास्ति स्वय प्रज्ञा, शास्त्र तस्य करोति किं ? लोचनाभ्या विहीनस्य दर्पण कि करिष्यति ?", (२५०)। गायति अतो नैकवार भगवान् उपगायन, "बुद्धौ शरण अन्विच्छ, बुद्धिनाशात् प्रणश्यति," "बुद्धिर् बुद्धिमता अस्मि," बुद्धिग्राह्यो ह्यतीन्द्रिय," बध मोक्ष च या वेत्ति बुद्धि सा, पार्थ !, सात्विकी, - इति गुह्यतम शास्त्र इद उक्त मया, अनघ !, एतद् बुध्वा बुद्धिमान् स्यात्, कृतकृत्यश्च, भारत ", एव आह अध्यात्मशास्त्र सारत प्रतिपादयन्, वदेव शास्त्र भूयश्च 'शास्त्र' शब्देन लक्षयन्, "इद गुह्यतम शास्त्रं", "गुह्याद् गुह्यतर" तथा, "सर्वगुह्यतम चापि शृणु मे परम वच" (गी०)। 'प्रज्ञा' शब्दस्य पर्यायवाचकेषु अभिधीयते 'बुद्धि' शब्दोऽपि यत्, तत्र कारण तु इद एव हि—ऋषीणां परमो 'प्रज्ञा' परमेष्ठी पितामह, परात्मनो 'बुद्धि'रूप जगद्सृजनकारक, अतएव मत 'बुद्धि' सर्वथा 'परमेष्ठिनी'। "मनुष्या अनुवन् देवान्, उत्क्रामत्सु ऋषिषु, अथ-को ऋषिर्भविताऽस्माकं (धर्ममार्गप्रदर्शक)? तर्कं एत ऋषि देवा प्रायच्छस्तेभ्य" एव ते (निर० परिशि०), 'ऋषति' आलोचि मन्य यद्, 'ऋषि' तर्क मन स्मृत। ऋषीणां अपि उपायोऽय, आराध्यां, निश्चयाय यैं, आर्ते, परम्पराप्राप्त, बहुभि सुपरीक्षित, प्रत्यक्षेण, अपि तर्केण, अनुमानेन, आगमेन च, स्थिरीकृतश्च सिद्धान्त धर्मो भवति, नान्यथा। बुद्धेरेव हि कार्योऽय, तर्को यस्तु अभिधीयते, "प्रत्यक्ष च, अनुमान च, शास्त्रं च विविध आगम, त्रय सुविदित कार्यं, धर्मशुद्धि अभीप्सता" (मनु), (२६०), प्रत्यक्षस्य, आगमस्यापि, प्रमाणस्य इतरस्य च, यत् किञ्चित् तद् भवेत्, सम्य ग्राहिणी बुद्धिर् अतत। योगयाज्ञवल्क्यश्च स्पष्टमाचष्ट भूरिश, "युक्ति

समग्रहमेवापि परतः वस्तुमर्हथ" (गी०), सत् शाखाणा च सवथा जीर्णोद्धार, तथैव च नवीनाना उपज्ञान, श्रद्धया, सत्या, पुन ,(२८०), यथा हि याज्ञवल्क्येन सूर्योपासनया कृता अयातयामा शुक्लाश्च वेदा वाजसनेयिना । 'वाजो' वार्य, शुक्र, इति, चयन, पूजन, 'सनि', वीर्य रक्षति ये, ओर्ध्व नयति ब्रह्मचर्यया, 'दिरोमते' च योगोक्ते येस्तु यत् परिणाम्यते बुद्धि इन्द्रिय मन पेशी हृदा वर्चसि, अथ ओजसि,तेजसि अपि, बले चैव, महसि अपि तथा, प्रमाण , अथ कि, सूक्ष्म नैष्ठेन वस्तुत्वस्यैव निर्णयते, तपस्विकमतो कप्य तथ्या 'वाजसनेयिन' । "सर्वप्रत्यक्षिकाता चाप्याश्रय सूर्य "उच्यते(मिरल०),शीर्षाणां अप्रमेयाणां शक्तीनां निचयो महान् , नाम 'वाज सनि ' अस्यास्ति अन्वर्थश्चापि हेतुभि , उपासकाश्च तस्याता ज्ञाता 'वाजसनेयिन', तच्छाखाणा उपज्ञाने शक्यते, अपि प्रयतन । प्राचीनमत मत्वर्थ उज्जीवयत मे पुन ,अध्यात्मशास्त्रम तु,य सर्वथा सम्मतो भवेत , प्रवर्तयत मूलाधाराध्यात्मान् समयोचितान् , सर्वथा अध्यात्मशास्त्रस्य ये भवत्यनुसारिण । निश्चिनोति चतुर्वर्गं अध्यात्म शास्त्रमेव हि, तथा तत्प्राप्त्युपायान् तत्रैव विशिनष्टि च, "न ह्यनध्यात्मवित् कश्चिन् क्रियाफलं उपाश्नुते, अर्थकामेष्वसक्ताना धर्मज्ञान विधीयते, धर्म जिज्ञासमानाना प्रमाण परम श्रुति "(म०), श्रुति श्रुत्वा नमामाना आत्मज्ञान परायण । (२९०) । "आत्मैव देवता सर्वा सर्वमात्मनि अवस्थित, आत्मा हि जनयत्येषा कर्मयोग शरीरिणा, यस्तु सर्वाणि भूतानि आत्मन्येव अनुपश्यति, सर्वभूतेषु चात्मान, ततो न विजुगुप्सते, ये चैव सात्त्विका भावा , राजसा , तामसाश्च ये, 'मत्त ' एव हि ते सब, न तु 'अह' तेषु, ते 'मयि', यस्य सर्व अभूत् आत्मा ब्रह्मज्ञस्य विजानत , को मोहस्तस्य क शोक एकत्व अनुपश्यत , सर्व भवति विज्ञात ज्ञानेन एकेन चात्मना, मृत्पिण्डेन यथैकेन सर्वमेव हि मृण्मय, निकृन्तनेन चैकेन सर्वमेवायसं यथा, अपि सर्वान् पदार्थांश्च, तद्यान् अत्येति अपि स्वय, सर्वत्र अतति यत् चाय मतत सर्वभुग् विभु , आनन , मनता व्यापी सर्वत्रैव, निरन्तर, अमित सन् स्वय, सर्वान् अन्यान् य परिमाति च, सर्वान् परि 'मिता'श्चापि 'मा' इत्यनेन निषेधति, 'न इति' 'न इति'इति नित्य च, तस्माद्'आत् मा' इति कथ्यते। सर्व आत्मनि सपश्यन्,सत् च असत् च,समाहित , सर्व आत्मनि सम्पश्यन् न अधर्मे कुरुते मन. । इमे समुद्रा गिरय महाद्रावि जगन्ति च, अन्त शरणमस्य यद्धा बहिरिव स्थिता", ( म०, उ०, गी०,

वेदयन्ते" (योगभाष्य) । "न नाकपृष्ठे, न महेन्द्रधिष्ण्ये, न चाप्यलोके, न रसा-तले वा, न पर्वताग्रे, न समुद्रगर्भे, न चाष्टसिद्धिषु,'अन्-इदं' हि मोक्षः" । "इत्य-भिप्रेत्य पुरुषं यद्रूपं 'अन्-इदं' यथा, महोत्सानौ पुरोधाय देवाः प्रतिमयुर् दिवं" (भा० स्क० १० अ० २) ; "...'इदं'-बुद्धिश्च बाह्यार्थे तु,'अहं'-बुद्धिस्तथाऽऽत्मनि, प्रसिद्धा सर्वजन्तूनां ; विवादो नेह कश्चन ; यत्र यत्र 'इदं' इत्येषा बुद्धिर् दृष्टा स्व-भावतः,तत्र तत्र [illegible] 'अनात्म'त्वं विज्ञातव्यं विचक्षणैः ; 'शरीरे' दृश्यते सर्वैः 'इदं'-बुद्धिः, तथैव च 'अहं'-बुद्धिश्च, विप्रेन्द्राः !, ततस् ते भिन्नगोचरे; 'शरीर'आलम्बना बुद्धिर् 'इदं' इति, आस्तिकोत्तमाः!, चिद्-'आत्मा'आलम्बना साक्षाद् 'अहं'-बुद्धिर् न संशयः ; 'इदं'-अर्थे शरीरे तु या 'अहं' इति उदिता मतिः, सा महाभ्रान्तिर् एव स्याद्, 'अ तस्मिंस्-तद्'-ग्रहत्वत." (सूतसं०) । यदेव 'इदं' तदेव 'एतत्', समी-पतरवर्ति च ; "इदमस्तु सन्निकृष्टं, समीपतरवर्ति च एतदो रूप, अदसस्तु विप्र-कृष्टं, तदिति परोक्षे विजानीयात्" (व्या०) । (१२०) । 'अहं'-'एतत्'-'न'कारः च प्रणवेन त्रयोऽपि ते, त्र्यक्षरैकाक्षरेणापि कथ्यन्ते 'ब्रह्म'रूपिणा । "ओंकारः, प्रणवः, नादः, प्रातिभः, सर्वविन्मति , उद्गीथः, तारकश्चापि,नामानि अस्य भवंति हि" । "तस्य वाचकः प्रणवः ; तत्र निरतिशयं सर्वज्ञबीजं ; प्रातिभाद् वा सर्वं" (योगसू०) । "उच्चार्यमाणः एव संसारभयात्तारयति तस्मा-त्तारः" (उ०), "अक्षरं प्रणौति" (छां० उ०); "सर्वं ज्ञानं प्रकर्षेण नवी-करोति", "भवतीति ओम्" (व्या०), ज्ञानेनैकेन चैतेन ज्ञायंतेऽपि त्रयो यतः, 'अहं' च, 'इदं', 'निषेध.' चापि 'अहमा' तु 'इदमः', तथा, तस्मात् 'सर्वज्ञता-बीजं' त्र्यक्षरं ब्रह्म चापि असौ, परात्मनो धारणया, संकल्पेन, एव ननु 'इदं', 'एवं', सर्वं हि यत् ज्ञेयं', 'एतद्' इत्यभिधीयते, तत्र जायते च, अनिति च, तथैवापि प्रलीयते, तस्मात् 'सर्वज्ञ'ता नित्यं अस्त्येव परमात्मनि । ब्रह्म-'अहं' ' अन्यद् अन्यस्मात्, अनन्यस्मात् ( सदैव हि ), अन् अन्यद् इति ( शब्देन [illegible] ) अन्यताऽभावः (उच्यते )"—प्रहेलिकामयं न्यायसूत्रं एकं इदं तथा, तमेवार्थं निवेदयति; न एवं [illegible] भाष्यते वात्स्यायनेन यदपि, नाऽन्योऽर्थस्तत्र युज्यते ।'

---

[ माण्डूक्यकारिकासु एका गौडपादकृताम्, अपि, प्रहेलिका इव दुर्बोध्या कूटार्था खलु, तादृशी—"क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तायिन., सर्वे धर्मा तथा ज्ञानं

( १३० ) "जन्माद्यस्य 'अस्य' [ 'इदम', 'एतद' ] यतोऽनु अयाद् 'इतरत' [ 'एतद', आत्मनो 'अन्यस्माद्', 'तत्' ] सत्य परं धीमहि", (भा०), इत्यादौ-स्तु पदैं पुराणमुनिना तत्त्व हि यद् वर्णितं, अन्यैश्चापि तथा, "इतरो (ऽहं) इतरस्मात्", चिज्जडात्, चेति वा, सर्वस्यास्य सदा एक एव कथन यन् 'न अह-एतद्'तु, इति । आत्मनस्तु 'इतरो' अनात्मा, ऽनात्मनोऽपि 'इतरो' हि सः,

---

नैतद् बुद्धेन भाषित" (गौ०का०प्रकरण ४ ९९)। भाष्यं अस्या शांकरस्य तीव्रकृत् न तु सर्वथा।

बौद्धग्रन्थेषु 'तायी' इति बुद्धस्याख्या प्रयोयसी, प्रज्ञानं 'तायते' यस्मात्, प्रसारयति सर्वत, सर्वथा उपकाराय, दयया करुणामय । "सर्वत्र खनिमोक्ष अनुमोदे शरीरिणा, बोधिसत्त्वत्व बुद्धत्व अनुमोदे च तायिना" (शांतिदेवकृत बोधिचर्यावतार, परिच्छेद ३, श्लो० २), "तायिनां, स्वाधिगतमार्गदेशकानां; ताय, स्वदृष्टमार्गोक्ति, येषा तद् विद्यते, ऽथवा, संसारार्थो हि ताय, आसंसारं अप्रतिष्ठितनिर्वाणतया अव स्थायिना' ( सटीका, पंजिका, प्रज्ञाकरकृता )। अन्यमतखण्डनविद्वद्भिः, बौद्धानां परि-पंथिभिः, कर्मणा महाव्रतत्वं तु गोपता तर्कयुक्तिभिः, 'तायी' शब्दस्तु 'चोरा'र्थ विद्वेषेण प्रयोजित —'अनेन, महाविद्या, याऽस्माकं आसीत् सुगोपिता, मुषिया जातु चौर्येण, सर्वेभ्य प्रकटीकृता, तायिना, सर्वदेशेषु, तायी चोरस्ततो स्मृतो'। 'तायु' शब्द तस्करार्थे वेदेषु ननु लभ्यते। (१०)।

कारिकार्थ समीचीन भाय एव विभाति मे—महाज्ञस्य तु कस्यापि (तथा शौद्धो दनेरपि, शाक्य गौतम बुद्ध-इति नामभि प्रथितस्य च, प्रज्ञानिनो महाज्ञस्य), तज्ञानस्य उपदेशिन, 'तायिन', परम 'ज्ञान', सर्वसंग्राहक सकृत्, सांसारिकेषु 'धर्मेषु बुद्धस्य क्रमते नहि'; देश काल क्रम-अतीत ज्ञान एकरस हि तद् 'सर्वे धर्मा', तथा 'ज्ञान' तत्सम्बन्धि वदन्ति वै,क्रमिक चापि अवच्छिन्न देश काल-क्रिया क्रमैः, परिणामि प्रतिक्षणं, एकदा एव अवरुध्य तद् एकावधारणेनैव, भूत भव्य भवद् गतं सर्वं, निषेधति एकेन न-कारेण तु शाश्वतं, 'न एतद्' 'न इति' [redacted] वा, तस्माद् 'बुद्धेन भाषितं', उपदिष्ट, हि सर्वेभ्यो, रहस्य परम तु यत्। एवं प्रकाशित चापि, रहस्यं परं एव तद् अद्यापि हि भवति एव, दुर्बोध्य नितरां ननु 'आश्चर्यवत् च एनं अन्य शृणोति, श्रुत्वाऽप्येन वेद न चैव कश्चित्" (गी०); "नाय आत्मा प्रवचनेन लभ्यो, न मेधया,

आत्मा ऽनात्मा च विसर्ग, 'इतरौ' स्त परस्परं, 'अस्य' 'दृश्यस्य' सर्वस्य जगतो ऽनात्मरूपिण, आत्मास्थितिलया सन्ति तस्य 'इतरत' आत्मन 'सर्वं वै खलु इद ब्रह्म, तज्-ज ए अन्''—सूत्रित यथा (मन्त्रसूत्र)। 'अहमेवास्मि, नान्यत्तु किंचिदप्यस्ति कुत्रचित्', "'मत्'-त परतर किंचिन् 'नान्यद्' अस्ति, धनंजय!, 'मयि' सर्वम् 'इद' प्रोत, सूत्रे मणिगणा इव" गी०) ''नान्यत्' पश्यति यत्राप स भूमा ऽमृतमस्ति सत्'' (छा० उ०), 'आत्मा ऽनुवीक्ष्य 'नान्यत्' (तु तदा) अपश्यद्'' (अयामन)'' (बृ० उ०) 'त्रिगुण च त्रितत्त्व च, त्रयो देवा, त्रयोऽग्नय, त्रयाणा च त्रिमूर्तिस्त्वं, तुरीयस्य नमोऽस्तु ते' (आदि स्यस्तो०), "त्रयीं, तिस्रो वृत्ती, त्रिभुवनं, अथो त्रीन् अपि सुरान्, अकाराद्यैर्वर्णैस् त्रिभिर् अभिदधत्, तीर्णविकृति, तुरीयं ते धाम ध्वनिभिर् अवरुन्धान अणुभि, समस्त व्यस्त त्वां, शरणद! गृणाति 'ओं' इति पद" (महिमस्तु०)। महिमा प्रणवस्यैव वेदे गीत पदे पदे। (१५०)। "त्रिधा दानानि दीयते, त्रिधा यज्ञ प्रवर्तते त्रिधा लोकास् त्रिधा देवा, त्रिधा विद्या, त्रिधा गति, भूत भव्य भविष्य च धर्मोऽर्थं काम एव च, प्राणापानावुदानश्च, अप्यत एव त्रयो गुणा (अनु गीता, अ० २४), 'तिस्रोऽवस्थास् त्रयो देहा, त्रय कामा, त्रयोऽग्नय, धृतय, शक्तय तिस्र त्रिवर्गोऽथ ऋणत्रय, त्रयो वर्णास्, त्रित कर्म—सर्वमेतत् त्रिवृत् त्रिवृत्'। माण्डूक्याद्युपनिषत्सु, गोपथब्राह्मणादिषु, अन्यग्रन्थेषु चैवापि सूचिता बहव त्रिका। त्रय तुल्याधिकारास्ते, तुल्यसम्मानगौरवा, सतृष्णश्च सदाऽन्यो ऽन्य न पृथग्भवितु क्षमा, न कश्चिद् अधरो वापि न च कश्चित् तथा उत्तर, त्रिष्वेतेषु गुणेष्वत्र सत्कार्ये असति वा पुन, प्रयोगेण, शुभत्वं वा, ऽशुभत्व वा, ऽभिजायते। यद् रजस्तमसी प्रायो निंद्येते, तत्तु रूढित, सत्त्वस्याभिभवात् ताभ्या, अतिमात्रतया तथा। पूर्वमुक्त, त्रयो देवा सात्त्व-राजस-तामसा, जगद्

न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्य एष आत्मा विवृणुते तनूं स्वा (कठ०, मुण्ड०, उ०) 'न सुविज्ञेय अणुरेष धर्म'' (कठ०उ०) क्रम त्रय-समाश्रय व्यति करेण या सतत क्रम त्रितय नघन विदधती विभाति उच्चकै, क्रमैकवपुर्, अक्रमप्रकृतिर् एव या शोभते, करोमि हृदि तां, अह भगवतीं, परां संविद" (ज्ञानगर्भ-श्लोक, काश्मीर संस्कृत-सीरीज ग्रन्थमालाया मुद्रिताया, क्षेमराजकृत-शिवसूत्रविमर्शिन्यां, २१ पृष्ठे उद्धृत)। (११)।

स्थित्यै प्रवृत्तस्तु तामसो हि भव शिव , संहाराय स एवास्ति रुद्र काले महो हर , अन्नपूर्णा च गौरी च सर्वकल्याणकारिणी इच्छा तमोमयी, नैव कालिका सर्वमारिणी, (१५०), "बहुलरजसे विश्वोत्पत्तौ भवाय नमो नम , प्रबलतमसे तत्संहारे हराय नमो नम , जनसुखकृते सत्वोद्रिक्तौ मृडाय नमो नम , प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नम " ( महिम्नःस्तु० ) ।

(४२) उत्पत्ति स्थिति संहारा , निद्रा च प्रलये तथा, संसारस्य [illegible] सर्वस्य तद् अवस्थाचतुष्टयं । (४३) जाग्रत्, स्वप्न, सुषुप्तिश्च, तुर्या—ऽवस्थाचतुष्टय शरीरवज्जीवस्य भवत्येव दिने दिने ।

(४४) भू , भुव , स्व चिदाकाश —इति लोकचतुष्टय, अग्नि , सोमश्च, सूर्यश्च, तमश्च तमस पर , प्रकाशाना परा काष्ठा, यत्नाशा भासित जगत्— 'रहस्य' 'सध्या' भाषाया तदेव एतच्चतुष्टय । (४५) स्थूल, सूक्ष्म, कारणं च, सर्व थाऽव्यक्तमेव च, वैराज , सौत्र , ऐशश्च, पारमार्थिक एव च, (४६) वैश्वानरश्च, हैरण्य , सार्वज्ञो, प्राज्ञ एव च, विश्वश्च, तैजस , प्राज्ञ , सर्वव्यापी तुरीयक , एतच् चतुष्कं देहाना, वेदान्तपरिभाषया, व्यष्टीना च समष्टीना, वैशेष्यात् च समानत । ( १६० ) । ( ४७ ) "आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्च शाश्वती" ( म०, शु० नी० ), अहर्निशं नृपाभ्यस्य एतद् विद्या चतुष्टय , मानवाना समस्ताना समानाऽऽन्वीक्षिकी मता, शिक्षकस्य त्रयी, दण्ड नीति स्याद् रक्षकस्य च, वार्ता भूप पोषकस्य, विद्या प्रोक्ता, विशेषत । 'विशेषत ' इति स्मर्य , एकान्त न नहि कश्चित्, 'एतदि' 'इदमि' 'इमये' तु 'अस्ति' आपेक्षिकेऽखिले । एकान्त निर्गुण ब्रह्म, यस्मिन् 'इ इ' एव गत, 'एतद्' ब्रह्मन्मय सर्वं , शिक्षा यत्र विभाति ते, 'न' नाशेष निषिद्धाश्च, प्रणवस्य चतुष्टये । व्यापि वाद् आत्मनो नूनं भूतेषु सकलेष्वपि, ब्रह्मा-न्तेषु सदैषु बसामन प्रकृते गुणैः , सर्वं सर्वेण सन्नद्ध, "सर्वं सर्वत्र सर्वदा" , "सर्वे एव समा , सर्वे एवान्ता ", श्रसराम ( बृ० उ० ) , "नहि गतिरधिकाऽस्ति कस्यचित् , सकृदुदपदर्शयतीह तुल्यता" (म०भा०) , "इन्द्रस्याशुचिशूकरस्य च सुखे [illegible] खे च नास्त्यतर, स्वेच्छाकल्पनया तयो खलु सुधा विष्ठा च भोज्याशन, रम्भा चाशुचिशूकरी [illegible] परमप्रमदास्पद , मृत्युत त्रासोऽपि सम , स्वकर्मगतिभिश्चान्योन्यभाव सम ( भर्तृहरि० ) । ( १७० ) । "अविशेषात् सर्वेषा कर्मणामिति निश्चय , महा

भूतानि नित्यानि भूताधिपतिसमाश्रयात्" ( म० भा० ), "ह्रदैर्योनयश्चेमा सुख दु खादिभि प्रजा " ( म० ), "वैरोध्यादेव तद्वादो वद्वाद " इति निश्चित (म० सू० ) । ( ४८ ) 'पश्यता' कारणे, सूक्ष्मे 'मध्यमा', 'वैखरी' तथा स्थूले शरीरे, या वाक च परा' प्रोक्ता हि 'अनाहता', प्रणवध्वनिरूपा तु–वाचा एतच् चतुष्टय । "सूक्ष्मा ( परा ) कुडलिनीमध्ये ज्योतिर्मात्रा हि अगोयसो , स्वयप्रकाशा पश्यती सुषुम्ना आश्रिता भवेत् , सा एव हृत्पकज प्राप्य मध्यमा, नादरूपिणी, अन्त सकल्पमात्रा स्याद्, अविभक्ता ऊर्ध्वगामिनी , सैव उरकण्ठतालुस्था, शिरोघ्राण तथैव च, जिह्वामूलोष्ठनिश्रोत्रवर्णव्यूहपरिग्रहा, शब्दप्रपचजननी श्रोत्रग्राह्या तु वैखरी " (आगम , सप्तशत्या चतुर्धरीटीकायामुद्धृत ) । "चत्वारि वाक् परिमिता पदानि , तानि विदुर् ब्राह्मणा ये मनीषिण , गुहा त्रीणि (अपराणि भेदानि) निहिता नेङ्गयन्ति, तुरीयां वाच अभि मनुष्या वदति ' ( वे० ) । (४९) चत्वार्यव मनुष्याणा सहजानि ऋणान्यपि, देवाना च, ऋषीणा च, पितृणामपि वै तथा , ( १८० ) , दानात्तु पचभूताना, ज्ञानविज्ञानदानत , सन्ततिमाणा शरीरस्य अपि दानात् तथा, क्रमात् , जीवदानाच् चतुर्थं तु ऋणं स्यात् परमात्मन । (५०) चत्वारश्च प्रकारास्ते ऋणनिर्मोचनस्य वै इष्टापूर्तं च विविध, प्रजाभ्यो ज्ञानशिक्षण , सन्तानपालन चैव , तथा मोक्षस्य चिन्तन । "वापी-कूप-तडागादि, देवतायतनानि च, अन्न प्रदान, आरामा , 'पूर्त' अर्थ्या (अर्थज्ञा ) प्रचक्षते , एकाग्निकर्म हवन, त्रेतायां यच्च हूयते, अन्तर्वेद्या च यद्दान, इष्ट तद् अभिधीयते ' (अत्रिसंहिता) । "ऋणानि त्रीणि अपाकृत्य मनो मोक्षे निवेशयेत् , अनपाकृत्य तान्येव मोक्षमिच्छन् व्रजत्यध , अधीत्य विधिवद् वेदान्, पुत्रांश्चोत्पाद्य धर्मत , इष्ट्वा च शक्तितो यज्ञे , मनो मोक्षे निवेशयेत् , आश्रमाद् आश्रम गत्वा,हुतहोमो, जितेन्द्रिय ,भिक्षाबलि परिश्रान्त , प्रव्रजन् प्रेत्य वर्धते ' (म०) । (५१) "सकाम स्वार्थक कर्म, निष्काम परार्थक , काम्य, नैमित्तिक, नित्य, निष्काम यच् चतुर्थक—कर्माणि एव चतुर्धापि, तच्च कर्मचतुष्टय , काम्य सकाम एवास्ति, मिश्रं नैमित्तिक तथा, निष्काम एव नित्य तु प्रायश्च स्मर्यते बुधै । ( १९० ) । (५२) शुक्ल, कृष्ण च, मिश्र च, अपि अशुक्लकृष्ण एव च , शुक्ल परार्थक पुण्य, कृष्ण स्वार्थ तु पापक, परार्थ अंशत स्वार्थं अंशतस् चापि मिश्रित, स्वद्वयविहीन यद् रहित फलकाक्षया—तदेव , शब्दपर्यायैर् वाच्य, कर्मचतुष्टय । (५३) "काम्याना कर्मणा न्यास संन्यास कवयो

विदु , यज्ञ-दान-तप -कर्म न त्याज्य, कार्यमेव तत् , (कर्तव्य किंतु तत्कर्म) सर्गं त्यक्त्वा फलानि च, ( एवं तत् कर्म निष्काम नैष्कर्म्यं भवति ध्रुवं ) , सर्वकर्मफल त्याग प्राहुस्त्याग विचक्षणा , नियतस्य (नित्यस्य) तु सन्यास कर्मणो नोपपद्यते" ( गी० ), 'नित्य' यत् 'नियत' कर्म, निष्काम सदपि ईर्यते , 'इज्या-अध्ययन-दानानि'—त्रिवर्णोचितकर्म यत् , जीविकाऽर्जन एवापि—सत्कर्मचतुष्टय। कर्म सर्वंजनीन यत् सत् सर्व 'यज्ञ' (इष्ट) उच्यते , महा जन सुखायैव उत्कृष्ट धार्मिक विदेय हि ; किंतु स्वर्गिर् इव, यज्ञेषु अपि द्वैविध्यकारिणी , "स्वर्गकामो यजेत" इति सकामो यज्ञ उच्यते , नित्या पंचमहायज्ञा , निष्कामा एव ते स्मृता । 'आपूर्त' कर्म तद् येन भवेल् लुप्तस्य पूरण , ( २०० ) , 'आपूर्त' भक्ति वृक्षाणा छिन्नस्थानेषु रोपण,'जलआयाना कूपाना तडाकाना च निर्मिति , ग्रव्यै सुगंधि निर्धूमै 'पवनस्या'पि पावन, दूषितस्य मनुष्याणा निश्व श्वासादिकर्मभि , उदार भावपूर्णाभि , भावितामि धुते यश ,मनध्वनिभिर् 'आकाश' सगीतैर्मधुरैस्तथा, आर्यैस्तु वेद विद्वद्भि पूयते अहरहो धुवं , दुर्भाग्यैश्चापि तु शब्दै , रागद्वेषवशानुगै , दूषितो मनुजैर्भिष 'शब्द'आधारो य आदिम , हविष्यै , 'कृष्णय'भोजन' पाच्यते,मलिनीकृत स्वस्यैव सर्वभक्षित्वाद् अमेध्यानर तु भक्षणै , पावन सतपि, 'पृथ्वी' पूयते वृक्षरोपणै , खनिता बहुधा चापि कृपवैरूपरीकृता, काष्ठार्थं छेदनै श्चापि वृक्षाणां, निर्पणीकृता, सर सरित् नदीना चापि आपो, या कर्षिता भुभि , दूषिताश्चापि, कृष्यादि रसनादीना प्रयोजनै , मलप्रक्षेपणैश्चापि, ग्रामेषु नगरेषु च—जलप्रवाहानां निर्माणै कूपाना खननैस्तथा, भूयश्च रक्षणैद् एषां, ताम्ररसादिक्षेपणै ( सूक्ष्माणा रोगकीटानां यै स्यात् प्रायो विनाशन )— आप एव विशोध्यन्ते, 'नारा' पुण्यास्तु या स्मृता । एवं विकृतभूतानि संस्कि यन्ते विपश्चिता । (२१०) । "सहयज्ञा प्रजा सृष्ट्वा पुरा उवाच प्रजापति —देवान् भावयतानेन, ते देवा भावयंतु व , परस्पर भावयत श्रेय परमवाप्स्यथ, तैर्दत्तान् अप्रदायैभ्यो यो भुक्त स्तेन एव स "(गी०)। (५४) पंचभूतानि भुज्यते मनुष्यैर् यै दिवानिश, तेषा शुद्धिस्तु,'देवानां ऋण'निर्यातन स्मृत, 'दीव्यन्त्य' शक्त्यो 'देवा ', महाभूताभिमानिन । यतीभ्यो ज्ञानदानाद्, शिक्षकैश्चापि दापनात् , पोषणात् शिक्षकाणा च, 'ऋषि आर्ष'विशोध्यते । जननात् सदपत्यानां, भरणाद्, रक्षणादपि, तथा च विनयाऽधानाद्, 'ऋण पित्र्य' विशोध्यते । "अध्यापन ब्रह्म

यज्ञ , पितृयज्ञस्तु तर्पण, होमो दैवो, बलिर्भौतो, नृयज्ञोऽतिथिपूजन" (म०), एते पचमहायज्ञा , ऋणनिर्मोचनेषु वै त्रिषु एव अतर्गता ज्ञेया , कर्त्तव्याश्च दिने दिने ।[१] आत्मसूक्ष्मगतेर् नित्य सर्वदेहिषु चिंतनात्,उच्च वचेषु भूतेषु, अज्ञेयाया अकृतात्म भि ,स्वान्तरात्मगतेश्चैव ध्यानयोगेन दर्शनात् (म०), शुभध्यानाच्च सर्वेषा भूतप्रियहितेहया आत्मन सर्वभूतेषु भगवद्भावदर्शनात् (भा०), आत्मवत्सर्वभूतेषु तथै वाचरणात् सदा, 'ऋण निर्यात्यते सर्व यदुक्त 'पारमात्मिक' । (२२०) "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते" (उ०)। "अनेन विधिना सर्वांस्त्यक्त्वा सगान्छनै शनै सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ' (म०) । ऋणनिर्मोचनाना च स्यादेव तु चतुष्टय । चतुष्टयानि उपासाना अपि स्मर्याणि सति यै—(५५) "पूजाकोटिसम स्तोत्र, स्तोत्रकोटिसमो जप , जपकोटिसम ध्यान, ध्यानकोटिसमो लय । (५६) बाह्यपूजाऽधमो भावो, मध्यमस्तु स्तुतिर्जप , उत्तमो ध्यानभावस्तु, ब्रह्मभाव कृतात्मन । (५७) अधमास्तु प्रियआरामा , शास्त्रआरामास्तु मध्यमा , उत्तमा धारणाऽरामा , आत्मारामा कृतात्मन । (५८) अधमा कर्मभातास्तु भक्तिभीतास्तु मध्यमा ,उत्तमा

---

१ ' आ ब्रह्मणो ये पितृवंशजाता , मातुस्तथा वंशभवा मदीया , कुलद्वये ये मम दासभूता भृत्यास्तथैवाऽश्रितसेवकाश्च, मित्राणि, शिष्या , पशवश्च, वृक्षा , दृष्टा हि अदृष्टाश्च कृतोपकारा , जन्मान्तरे ये मम सगताश्च, तेभ्य स्वधा अन्न अह ददामि । येषा न माता, न पिता, बन्धुर् न चान्यसिद्धिर् न तथाऽन्नमास्ति, तत्तृप्तयेऽन्न भुवि दत्त एतत् , ते यान्तु तृप्ति, मुदिता भवन्तु । देवा , मनुष्या , पशवो, वयांसि, सिद्धा स-यक्ष-उरग दैत्य सघा ,प्रेता पिशाचास् तरव समस्ता ये चान्न इच्छन्ति मया प्रदत्त पिपीलिका , कीटपतगकाद्या बुभुक्षिता , कर्मनिब धबद्धा , प्रयान्तु ते तृप्ति, इद मयाऽन्न तेभ्यो विसृष्ट सुखिनो भवन्तु । चतुर्विधो भूतगणो य एष, तत्र स्थिता येऽखिलजीवसघा , तृप्त्यर्थ अन्न हि मया विसृष्ट तेषा इद, ते मुदिता भवन्तु" । एव प्रायो हि पंचापि क्रियन्ते चैककर्मणा, सध्यानेन सवपा, अन्नदानेन चैव हि ।

तथा च देवपूजाया, दीप प्रज्वाल्यते यदा, पठ्यते चेदश श्लोको मनसा शुचिना, सदा— प्रस्फुरत्परमदीप्तिमडल, गोघृतप्रचलवर्कुकुमारुण, आर्त्तिक परिगृहाण च,र्त्ति-हन ।, पुण्यकीर्त्ति विरादोक्षव त्वने ।" ( ६ ) ।

ज्ञानभीतास्तु, शान्ति भीतिर्महाऽमन । (५९) अधमस्तु कुलाचार, लोकाऽऽचारस्तु मध्यम, उत्तमो नियमऽचार, स्वेच्छाचार कृताऽऽमन । (६०) अधम कर्मभावस्तु, भक्तिभावस्तु मध्यम, उत्तमो ज्ञानभावस्तु, भाव अभाव कृत ऽऽमन । (६१) अधमो देहभावस्तु, जीवभावस्तु मध्यम, उत्तम साधुभावस्तु, सोऽहंभाव कृताऽऽमन ।(२३०)।(६२) अधमा 'इम' इच्छति, च'अमु' इच्छन्ति मध्यमा, उत्तमा 'मोक्ष' इच्छति, नैवेच्छाऽशीत कृताऽमन । (६३) होमयात्रा अधमा, पूजा प्रतिमानां तु मध्यमा, उत्तमा ध्यानविज्ञाऽवस्था, सहजा भावित ऽऽमन । (६४) बालानां काष्ठलोष्टेषु, मनुष्याणां तथाऽप्सु च, मनीषिणां मोषु देवा, बुधस्यऽऽत्मनि देवता" (पु०)। (६५) परस्परभयात् केचित्पापा पाप न कुर्वते, राजदण्डभयाद् अन्ये, यमदण्डभयात्परे, आत्मदण्डभयादेव निष्पापस्य कृत ऽऽमन (म०भा०)। जीवस्योत्कर्षणे सति चत्वार तु ईदृशा क्रमा, न तु ते अद्य नीयन्ते आरोहणपथे प्रजा, शिक्षकै रक्षकै वापि स्वार्थसाधनतत्परै, प्रत्युत एते ऽपकृष्यन्तेऽवारोहणपथे जना । ' गुरवो बहव सन्ति शिष्य वित्त अपहारका, गुरवो विरला ते ये शिष्य-सन्ताप हारका " ( गुरुगी० )। अत्यैव हि पश्य मूढ़, हिन्दू-'धर्मान्' विहाय स्वद् विकृतान्, बहवो यान्ति परधर्मान् दिने दिने । ' यदा भूतपृथग्भावं एकस्थ अनुपश्यति,तत एव च विस्तार,ब्रह्म सम्पद्यते तदा"(गी०)। (२४०) । (६६) धर्मशास्त्र, अर्थशास्त्र, कामशास्त्र तृतीयक, मोक्षशास्त्र चतुर्थं चापि—एतच्छास्त्रचतुष्टय, सर्वाण्यपि शास्त्राणि चतुर्ष्वन्तर्गतानि हि, प्राच्यपाश्ची न सा विद्या या एतेभ्यो बहि स्थिता । "द्वे विद्ये वेदितव्ये वै", मुण्डकेऽपीति गीयते, "परा यथाऽक्षर ब्रह्म तदक्षरमधिगम्यते ', (उ०) तथाऽपरा यया सर्वम न्यद् आसाद्यते भूमि, मोक्षशास्त्राभिधाऽऽद्या तु द्वितीया त्रितयाऽऽत्मिका । आन्वीक्षिकी मोक्षशास्त्रे धर्मशास्त्रे त्रयी स्मृता, अर्थशास्त्रे दण्डनीति, वार्ता या काम एव च । शब्दोऽन्यथा विभागस्य, नैकरीत्या तथाऽग्रह । (६७) प्रभुत्वशक्तिर्, उत्साह मन्त्र शक्ती तथैव च, परस्पर अविरुद्धाचि प्रजाराज्ञो चतुर्विका, उत्पादिनी पोषणाय, सर्वलोकसुखाय च, सुशासनैतद् पर्याप्त राजशक्तिचतुष्टय । (६८) दक्षिणश्च, करश्चापि, वृद्धिश्च, वृत्तिरेव च, चतुर्विधं स्मृत मूल्य चतुर्णां वर्णकर्मणां । (६९) यथा एव तु मनुष्याणां जीविकाकर्म 'वर्णनात्' चतुर्धा प्रविभज्यन्ते 'वर्णा ' प्रोक्ता जनैरिति, 'वर्णनात्' चित्तवृत्तीनां,'वर्णा' मात्राऽक्षराणि वै,

'वर्णो' इत्यभिधीयन्ते, स्वरादीनि तथैव हि, (२५०) स्वरो,ऽनुस्वार एवापि, विसर्गो, व्यजन तथा—अक्षराणां समाम्नायस्यैतद् 'वर्ण'चतुष्टय, 'स्व' राजतीति स्वर प्रोक्त , व्यजन तु व्यनक्ति त, अनुस्वार स्वरस्याऽनु, विसर्गेण विसर्जन, "स्वराश्च,'ब्राह्मणा' ज्ञेया ,वर्गाणा प्रथमास्तथा, द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि 'भूमिपा ',वर्गाणा पचमा 'वैश्या ',अतस्थाश्च तथैव च,ऊष्माणश्च हकारश्च 'शूद्रा ' एव प्रकीर्तिता " (याज्ञ० शिक्षा०)। जीवा मनस्तु प्रकृतेर् व्यवसायाश्च चतुर्विध। अजनाद् 'भग' भूतास्ते, शिरो बाहू दर क्रमा, ज्ञान क्रियेच्छा ऽनुबुद्धि-वृत्तीना 'शक्ति'-साधना —चतुर्धर्मकमेव स्याद् एतद् भगचतुष्टय। (७१) आदौ आयस्य कीयानि, निकामीयानि वै तत , विलासीयानि,सन्न्यस्तानि इति—वस्तुचतुष्टय। (७२) उद्भिज्जा , स्वेदजाश्चापि, अडजा , पिडजास्तथा, स्थावराणा जगमाना भूतग्रामचतुष्टय। (७३) मणयश्चाऽपि, वृक्षाश्च, पशवो, मानवास्तथा, एव चापि निकायाना जीवाना तु चतुष्टय। (७४) यथा मनुष्येषु, तथा मणिवृक्षपशुष्वपि, देवेष्वपि च, सर्वत्र त्रैगुण्यात् तु चतुष्कता, (२६०), "श्वेता ब्राह्मणमृत्तिका" (शिल्पदीपिका),"ब्राह्मणा दृषद स्निग्धा श्वेता पकजसनिभा "(वास्तुसार०), (७५) ' विवेकी अश्वो घृणी विप्र , तेजस्वी क्षत्रियो बली, कोष्णभावो भवेद्वैश्य , शूद्रो निस्सत्त्वको भवेद्" (अश्वविद्या०), (७६) "शुभ्रा दीर्घा स्तब्धकर्णा घुघुरुका तनूदरा , सुमुखस्त्वल्पदताश्च, ब्राह्मणास्तेभक जातय ", एव गजा , वृषा , मेषा , अजाश्च, महिषा , खला , धान्यानि, धातवो, वृक्षा , पक्षिण , देवदेवता•, मत्र, तीर्थानि, शास्त्राणि, गधर्वोरगराक्षसा, दैत्या , वेदा , पुराणानि, रक्षान्यपि तथैव च, चतुर्धा प्रविभक्तानि, गुणैरेव, न जन्मत ( तै० सं० )। ( ७७ ) ब्राह्मणोऽजो (बर्कर ),ऽवि ( मेष ) क्षत्रिय ,गौर् वैश्यो,ऽश्वस्तु शूद्रक , ( शतपथ ब्रा० )। ( ७८ ) 'अग्निर् , इन्द्रो, विश्वेदेवा , अदेवा ', तत् चतुष्टय, चतुर्वर्णानुसारि एतद् देवाना तु चतुष्टय। ( ७९ ) वसन्त ग्रीष्म वर्षाश्च, सामा न्यो वत्सर , तथा, चतुर्वर्णात्मक चैतद् भवेद् ऋतुचतुष्टय। ( ८० ) गायत्री चापि, त्रिष्टुप् च, जगती च, अपि अनुष्टुभ , ब्रह्म-क्षत्रिय विट्-शूद्र छदसा तच् चतुष्टय' ( ताण्ड्य महाब्राह्मण )। ( ८१) "ऋग्भ्यो जात वैश्यवर्ण आहु , यजु र्वेद क्षत्रियस्याहुर्योनिं, सामवेदो ब्राह्मणाना प्रसूति ", ( अथर्व शूद्र प्राहुरेव तु पूर्वे ), ( तैत्तरीय ब्राह्मण ), वेदेषु एव वर्णभाग कृतोऽस्ति, चातुर्विध्य वेदचतु

इष्टे तत । (२७०) । (८२) सित लोहित-पीतासितापि, अमितश्च चतुर्थक , अन्वर्थ मेव वर्णाना ( रङ्गाना ) तत्तु वर्णचतुष्टय । (८३) रौप्य, ताम्र, सुवर्णं कृष्णायस अथापि च, यथानुगमतो हि एतद् अस्ति धातुचतुष्टय । (८४) 'कृत्तिकाऽदि चअश्लेषान्त, विशाखाऽन्त तथा आ मघा, अनुराधाऽऽदि आ श्रवण, धनिष्ठाऽदि सप्तर्क, नक्षत्राणां चातुर्वर्ण्यं तस्मात्ता चतुष्टय । कर्क मन्-मीना विप्राश्च मेष-सिंहो धनुर् नृपा , वृष कन्या मृगो वैश्या , शूद्रा युग्म तुला घट , वर्णाना अपि च एतेषा, एष राशिचतुष्टय ( जातकं ) । ( ८५ ) "आदित्या क्षत्रिया तेषां, विशश्च मरुतस्तथा, अश्विनौ तु स्मृतौ शूद्रौ तपसि उग्रे समाहितौ, स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चय , इत्येतत् सर्वदेवाना चातुर्वर्ण्यं प्रकीर्तित" (म० भा०) , ( ८६ ) पन्नगाना च सर्पाणा चातुर्वर्ण्यं विवेचित, सुश्रुते तु गुणैरेव, मक्षीषु अपि तु जातिषु, ( सुश्रुत, कल्पस्थान, अ० ४ ) । (८७) अश्वत्थ वट बिल्वास्तु ब्राह्मणा तरवु श्रुता ,श्रीपर्णि देवदारु आद्या तथैव क्षत्रिया श्रुता , पुष्प फल पत्रवन्तश्च वृक्षा वैश्या इति श्रुता , मन्दर, बर्बुर, धत्त , शूद्रा प्रोक्ता तथैव च, चातुर्वर्ण्ये स्थित ह्येव वृक्षराशिचतुष्टये' । (२८०) । (८८) "लघु यत् कोमल काष्ठ, सुघट, ब्रह्मजाति तत् , दृढाग, लघु यत् काष्ठ अघट, क्षत्रजाति तत्, कोमल, गुरु यत् काष्ठ, वैश्यजाति तदुच्यते, दृढाग, गुरु यत् काष्ठ, शूद्रजाति तदुच्यते" ( अगस्त्यमत ), 'वर्ण शब्दस्य तु स्थाने 'जाति'र् अपि उक्ता यदि, तथाऽपि तु गुणैरेव कृत तत्र विवेचन , अन्यथा नास्ति सति वृक्षाणां, किंतु, तासु यत् चतुर्विधत्व एवात्र दृष्ट, तत् तु गुणै , स्फुट , चतुर्वर्णविभक्त तत् काष्ट वृन्द चतुष्टय । एकस्याः भवेद् एको वर्णो, अन्यस्तु अन्यदृष्टित , प्रयोजन विभेदेन वृक्षस्य एकस्य चैव वै , वृक्ष येन एकवर्णो ,काष्ठस्वेनापरो हि , अन्यक्षमेवं समिद्धा वर्णाना गुण कर्मभि । (८९) "चक्रवाका, कपोताश्च, ब्राह्मणा , गरुडा , बका क्षत्रियाश्च, मयूराश्च हंसा , वैश्या इति स्मृता , काक गृध्रादय , शूद्रा , एव पक्षि चतुष्टय । (९०) पुष्पकीटा ब्राह्मणाश्च, धातुकीटास्तु क्षत्रिया , कौशेयकीटा वैश्याश्च, मल पङ्क भवास्तु ये कीटा शूद्रास्तु ते ज्ञाता , एवं कीटचतुष्टय' (वा०पु०) । (२९०) कामरतु ब्राह्मण्य प्रोक्त , क्रोध क्षत्रिय उच्यते, लोभो वैश्यम् तथा शूद्रो मोह मत, न सशय । एव तु चित्तवृत्तीनां अन्तरारिचतुष्टय, चतुर्गा अंतरालो तु विद्विनौ मद् म यरौ । (९२) "सत्त्व

कृत, रजश्रेता, द्वापरं तु रजस्तमौ, कलिस्तमस्तु विज्ञेय ', एतद् युगचतुष्टय। (वायु०पु०अ०८) ।(९३) कृते ▪ मानसी,त्रेते वार्क्षी चापि रसात्मना, हस्तसिद्धिर् द्वापरे वा, पि अ सिद्धिस्तु कलौ युगे, ( मनसा चिन्तनात् इष्ट, कृतादौ उपतिष्ठते, वृक्षेभ्य सलिलेभ्यश्च त्रेतायां परिपूर्यते, इत्यादि हस्तकर्मश्च इष्टसिद्धिस्तु द्वापरे, सर्वप्रकारकैर्वीर् अप्यमीष्ट न निष्पत्ति, सम्यक्, कलौ, सर्वथा वा, तत्तु सिद्धि-चतुष्टय (वा०पु०, मार्क०पु०) । एव सर्वत्र ससारे व्याप्त वर्णचतुष्टय, तस्यापि व्यापि त्रैगुण्य गुणसाम्य चतुष्टय। वेदेऽन्यशास्त्रपरिपाकिता गति कर्मवर्णस्य साधि का —पुरुष 'सौ अपुरुष्टासो, कोऽसी वि ?; 'ब्राह्मण ' तु इति, 'कसमो ब्राह्मण' ? इति पृष्टे, चैवोत्तर ददौ—'किं ब्राह्मणस्य पितर, किमु पृच्छसि मातरं ? श्रुत चेद् अस्मिन् वेद्य, स पिता, स पितामह ' " (शतपथब्राह्मण, २ ३० १), 'एतादृशा गुणा यस्य, त देवा ब्राह्मण विदु'—व्यासन बहुधैव ▪ धर्म मोक्षो , न जन्मना । "न तदस्ति पृथिव्या वा दिवि देवेषु वा पुन सत्व प्रकृतिजै मुक्त यत् स्याद् एभि त्रिभि गुणै " (गी०) , (१००) , यथैव शास्त्र अध्यात्म त्यस्त तु त्रिगुणै , तथा व्याख्यानि अन्यानि शास्त्राणि, वाङ्मये खलु सस्कृते । मनुस्मृतौ च गीताया तथा उक्ता यहव त्रिधा । (९४) 'आत्मप्रतिकर सर्व रजोऽर्थातिरर मत, तमस्तु मोहसयुक्, अव्यक्त तु चतुर्थक, एतद् हि चित्तावस्थानां अस्ति भाव चतुष्टय । (९५)अव्यो, मध्यो, जघन्यश्च, चतुर्थो निरपेक्षक , एतत् त्रिगुण नैर्गुण्य फलोदय चतुष्टय ।(९६) वेदाभ्यास सात्विक स्याद्, आरम्भरुचिता रज , तामस निद्रावृत्तित्व, अनारम्भश्चतुर्थक , व्यवसाय प्रकाराणा एतत् खलु चतुष्टय । (९७) कर्म आत्मसतोषकरं, प्रेरित कीर्तिलिप्सया; लज्जाकर तथा, त्यक्तफल—कर्मचतुष्टय, प्रवर्तित च त्रिगुणै , निर्गुणं चापि वै, क्रमात् । (९८) देवत्व सात्विका यान्ति, मनुष्यत्व तु राजसा , तिर्यक्त्व तामसाश्चापि, मुक्ति गच्छ त निर्ममा , त्रिष्वप्येतेषु त्रिविधा उत्तम अधम मध्यमा , एव हि स्मृतिषु मोक्ष गतीनां ▪ चतुष्टय (म०,अ०१२) । (९९ ११०) श्रद्धा, तप , तथाहार , त्यागो, दान, यजि तथा, ज्ञान, कर्ता च, कर्मापि, धृतिर् , बुद्धि , सुख तथा, (११०) त्रिकं त्रिक ▪ सर्वे चापि, असक्तत्व चतुर्थकं । "त्रिविधस् त्रिविध कृत्स्न ससार सार्वभौतिक " (म०), समाहारश्च गुणो च चतुर्थे परमात्मनि । एतेषा सुविवेकेन, कृत्येषु, प्रकृतिष्वपि, विभागेनाधिकाराणा, कर्तव्याना तथैव च, तथैव सुखदु खाना, तथैव

श्रमलाभयो, (–ईदृकश्रमस्य चैव एतन्मूल्यं स्याद्, इति योजनात्, न विना एत-च्छ्रम मूल्य एतल् लभ्य भवेद् इति, एत सुखस्यानुषंगि दुख च एतद् भविष्यति, एतद् दुख विना कश्चित् सुखमेतद्य लप्स्यते—) सम्यक् सर्वमनुष्येषु सुव्यवस्था प्रवर्स्येति, सर्वेषा चापि भावाना भविष्यति समन्वय, सर्वे पदार्था लप्स्यते स्व स्व स्थान यथोचित। एव निश्चित्य सिद्धांतास्, सत्यधोगान्त्ययोत्तमान्, सुव्य-वस्था समाजस्य कार्यार्थं सुदृढा धुव। (१०८, आदित १९२९ श्लोका)।

---

## ६ अध्याय

### समाजव्यवस्था चतुर्व्यूहा।

"सघात्तयान् सर्व्वलोक परस्परमुपाश्रित" (म० भा० शा० अ० ११८), सघो यत्र बल तत्र, निरस्तय चे कुतो बल?, "बुद्धिर्यस्य बल तस्य, निर्बुद्धेस्तु कुतो बल?", यत्र बुद्धि तत्र सघ, निर्बुद्धीना न सघता, अन्मनैवोत्पनीयस्ये न सघो, न बल, न धी, समाजव्यूहन पूर्वं कृतोऽतो गुणकर्मभि। चत्वारो ऽयान्तरव्यूहा, समाजे सुव्यवस्थिते, वर्णाश्रमात्मका, सर्वे सर्वदा सति सहता (१) शिक्षाव्यूह, तथा (२) रक्षाव्यूह, (३) तत्र तृतीयक वार्त्ताव्यूह, (४) चतुर्थस्तु सेवाव्यूहो ऽत्र सम्मत। (१) तत्र 'शिक्षक वर्गश्च, 'ब्राह्मणा' च यवति हि, विद्यार्थीना समूहश्च, 'ब्रह्मचर्य'आश्रमस्तु च, मिलित्वा सहतौ हि एतौ प्रथम, सर्वभावक, 'शिक्षाव्यूह' तु, योऽन्येषा व्यूहाणा ज्ञानदायक, 'ब्रह्म' श्रुत च, वेदाश्च, परमात्मा तथैव च— तपस्यया त्रय सिद्ध यस्य स 'ब्राह्मणो' भवेत्, 'ब्रह्म चारी' तु यत्त्रयाणां, त्रय साधयितु चरेत्। "य कश्चिदेव अपरोक्षी-कृत्य आत्मानं तु वर्तते कृतार्थत्वेन, स एव ब्राह्मण श्रुतिमानत। (१०)। ब्राह्मणो नाम कि जीव? कि देह? जातिरेव वा? कि ज्ञान? कर्म कि? कि वा धार्मिक? कि [illegible] ब्राह्मण?" ईदृक् प्रश्नान् समुत्थाप्य, सर्वान् कल्पान् अपोहति, वज्रसूच्युपनिषदि, वर्णपि सद्ब्राह्मण स्वय। "न जीवो, नैकदेहेषु जन्मनात्, नैकत्र जन्मसु। न देहो, पाञ्चभौतानि शरीराणि अखिलान्यपि, श्वेत रक्त पीत कृष्ण रगाना नियमोऽपि नो, दाहे पितृशवस्यापि, ब्रह्महा नहि पुत्रक। न जाति, ऋषयो जातास्तु अतिभिन्नासु जातिषु"। एव विकल्पान् आरोप्य, अपवदति अथ वेदवाक्।

निदिध्य च विकल्पांस्तान्, विधानं विदधाति असौ—"अद्वितीयं परात्मानं, हीनं जातिगुणादिभिः, सत्यज्ञानानन्दमयं सच्चिदानन्दरूपिणं, अशेषकल्पाधारं च, निर्विकल्पं स्वयं सदा, साक्षात्कृत्य अपरोक्षं तु कृतार्थो यो हि वर्तते, शान्तिदान्त्यादिसम्पन्नो रागद्वेषविवर्जितः, तृष्णाऽहङ्कारमात्सर्यलोभदम्भादिभिस्तथा रहितः, तं परात्मानं हृदये धारयन् सदा—य एव वर्तते विद्वान्, क्षपयन् सर्वकल्मषान्, यत्र कुत्र समुत्पन्न, स एव ब्राह्मणोऽस्ति वै" ( वज्रसूच्युपनिषत् ) । (२०) । सच्छिक्षया तु सज्ज्ञाने समाजे सुप्रवर्तिते, सच्छिक्षकैः, सर्वमन्यत् सम्पन्नं भवति ध्रुवं; ज्ञानं वीर्यं च, भोज्यं च, परस्परसहायत्वम्, शिष्टता सभ्यता, शान्तिः, तुष्टिः, पुष्टिश्च सर्वथा सर्वांगेषु समाजस्य, सौमनस्यं च, सिध्यति । "रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नः कृधि, रुचं विश्येषु शूद्रेषु, मयि धेहि रुचा रुचं" (य०वे०) सर्वेषु रुचं आधातुं शक्तः, सच्छिक्षको हि सः, गुणकर्मविवेकेन क्षमः शिष्यपरीक्षणे । 'वर्चस्वी ब्राह्मणोऽस्माकं तपोविद्यायुतो भवेत्, तेजस्वी क्षत्रियश्चापि, महस्वी वैश्य एव च, रहस्वी च तरस्वी चाप्यस्माकं शूद्रो भवेत्, स्वकर्म धर्म निष्ठाश्च सर्वेऽन्योऽन्यमनुव्रताः'—इत्याशिषा तु सम्पत्तिः आयत्ता शिक्षकेषु वै । सच्छिक्षकास्ते एवात्र तपोविद्यायुतास्तु ये, वीतरागभयक्रोधाः, सर्वलोकहिते रताः । "यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा, तस्यापि तत्क्षुधा राष्ट्रं अचिरेणैव सीदति" (म०), सत् 'श्रोत्रिय' स एवास्ति यो भवेत् सु बहु 'श्रुत', सम्पन्न सार्थया 'श्रुत्या, न "अनुवाकहत" पुन (३०), विनीतश्च, दयालुश्च, सच्छास्त्राणां च शिक्षकः, 'शुश्रूषव'श्च 'श्रोतारो' यस्य श्रद्धालवो बहु, सार्थं वेदं तु यो वेद, स हि 'सच्छ्रोत्रिय' स्मृतः, अन्यथा, श्रोत्रियाऽभासो, ऽनुवाकहतबुद्धिकः, युधिष्ठिरावबोधाय प्राह कुन्ती यथा पुरा—"मन्दकस्येव ते, राजन्! श्रोत्रियस्य अपि पण्डित, अनुवाकहताबुद्धिः एकं धर्ममवेक्षते" (म०भा०), नावेक्षतेऽपरान् धर्मान् अधिकं समयोचितान्, अनभिज्ञा तदर्थानां, केवलं शब्दपाठिनां, ईक्षमाणा एकं पक्षं तु, पश्यन्ती नाऽपरानपि, न एवं बुद्धिः श्रोत्रियस्य सार्थान् वेदान् विजानतः, साङ्गोपाङ्गान् सरहस्यान्, ऊहापोहक्षमस्य च "स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थं; अर्थज्ञ इत् सकलं भद्रं अश्नुते, नाकं एति ज्ञान विधूतपाप्मा" (निरुक्त०), "योगः, तपो दमो दानं सत्यं, शौचं, दया, श्रुतं, विद्या, विज्ञानं, आस्तिक्यं—एतद् ब्राह्मणलक्षणं" (वसिष्ठस्मृ०)। (२) 'रक्षकाणां'

च धर्मेण, 'क्षत्रियो' यस्तु कथ्यते, गार्हस्थ्याद् विनिवृत्तानां 'वानप्रस्थ'आश्रमेण च, योगक्षेमविधाताऽथ 'रक्षा व्यूहो' विधीयते। दुर्वर्ण्यायते यस्तु क्षताद् अनुचितात् अपि, 'स एव क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः (म०भा०), (४०), समाप्य गृहधर्मान् य वनगर्ड' तु 'प्रस्थिताः', 'वानं' तरूणां पङ्क्तौ हि, 'प्रस्थो' धामस्थान', भवेद् येषां तु, लोकसेवार्थं,निर्द्वन्द्वमनसा तथा, रागद्वेषविमुक्तेन,'वानप्रस्था' तु ते मताः, (इन्द्रप्रस्थ राजप्रस्थ वत् शब्दोऽयं विनिर्मितः), वनगत, तरपट, वान, च उपवन समा । वृद्धाश्रमे तु, वान स्था, व्यवहारेषु दीक्षिता विविधेषु, ततो जाताः कुशलाः दूरदर्शिनः बहुकार्याऽनुभविनः, निस्स्वार्थाश्च अधुना हि ते, 'रक्षकान्' सचरार्थेषु परामर्शयितुं क्षमाः, नियन्त्रयितुं पुनरपि, (गुररयान् चेत् प्रयोजन), तद्द्वारा सर्ववर्णांश्च कृत्यान् कारयितुं स्वकान्, धनस्था कपय बद्धन् निरीक्षन्त पुन नृपान्। "स्वाध्याये नित्ययुक्तो य, दान्तो, मैत्र, समाहित, दाता नित्य, अनआदाता, सर्वभूतानुकम्पक" (म०), कर्ता विविध यज्ञाना वानप्रस्थस्तु कथ्यते। सर्वं विश्वजनीन हि कर्म 'यज्ञ',परार्थकृत्, न पशूना विशसन, नाग्नौ बहुघृतार्पण। "गतसंगस्य, मुक्तस्य, ज्ञानावस्थितचेतस, यज्ञाय आचरत, कर्म समग्र प्रविलीयते, (५०); ब्रह्मार्पण, ब्रह्म हविर, ब्रह्माग्नौ ब्रह्मणा हुत, ब्रह्मैव तेन गन्तव्य, ब्रह्मकर्मसमाधिना, दैवमेवापरे यज्ञ योगिन पर्युपासते, ब्रह्माग्नावपरे यज्ञ यज्ञेनैवोपजुह्वति, श्रोत्रादीनि इन्द्रियाण्यन्ये इन्द्रियाग्निषु जुह्वति, सर्वाणीन्द्रियकर्माणि प्राणकर्माणि च, अपरे, आत्मसयमयोगाग्नौ जुह्वति ज्ञानदीपिते, अपान जुह्वति प्राणं, प्राणेऽपान तथाऽपरे, प्राणापानगती रुध्वा, प्राणायामपरायणा, अपरे नियतआहारा, प्राणान् प्राणेषु जुह्वति; सर्वेऽप्येते यज्ञविदो, यज्ञक्षपितकल्मषा, द्रव्ययज्ञा:, तपोयज्ञा, योगयज्ञा तथाऽपरे, स्वाध्यायज्ञानयज्ञाश्च, यतय संशितव्रता, एव बहुविधा यज्ञा वितता ब्रह्मणो ( वेदस्य ) मुखे, कर्मजान् विद्धि तान् सर्वान् एव ज्ञा वा विमोक्ष्यसे, श्रेयान् द्रव्यमयाद् यज्ञाज् ज्ञानयज्ञ, परन्तप ! सर्वं कर्म, अखिल, पार्थ !, ज्ञाने परिसमाप्यते" ( गी० ) । "आरंभयज्ञा क्षत्राश्च, हविर्यज्ञा विश स्मृता, परिचारयज्ञा शूद्राश्च, जपयज्ञा द्विजातय ; ब्राह्मणा ज्ञानयज्ञाश्च, रक्षायज्ञाश्च क्षत्रिया, वार्तायज्ञास्तथा वैश्या, सेवायज्ञाश्च पादजा " ( म० भा० ), ( ६० ), विप्रस्याध्यापन यज्ञो, रक्षण क्षत्रियस्य च, द्रव्यासदान वैश्यस्य,शूद्रस्यान्यसहायता ,'यज्ञ' बुद्ध्या, त्यागबुद्ध्या

'यज्ञ' प्रचारित कृत। "यामिमा पुष्पिता वाच प्रवदति अविपश्चित ,वेदवादरता" मूढा , "नान्यदस्तीति वादिन" (गी०) , तयाऽपहृतचेतसा भोगैश्वर्यप्रसक्तिना , "यावान् अर्थ उदपाने सर्वत सम्प्लुतोदके, तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत" ( गी० ), "प्रायेण वेद तद्दिद न महामतोऽपि, देव्या विमोहितमतिर्वत माययाऽल, त्रय्या, जडीकृतमतिर, मधुपुष्पिताया, वैतानिके महति कर्मणि युज्यमान" ( भा० स्क० ६ अ० ३ )। "फलश्रुतिरिय नृणा , न श्रेयो , रोचन पर, श्रेयोविवक्षया प्रोक्त ; यथा भैषज्यरोचन ,एव व्यवसित केचित् अविज्ञाय,कुबुद्धय , फलश्रुति कुसुमिता, न वेदज्ञा , वदन्ति हि , कामिन कृपणा लुब्धा पुष्पेषु फलबुद्धय , अग्निमुग्धा , धूमताता , स्व लोक न विदन्ति ते , न ते माम् अग ', जानन्ति हृदिस्थ यो, 'इद' ( नागड ) यत ( जायते ), उक्थशस्त्रा , हि असुतृपो यथा नीहारचक्षुष , ते मे मत अविज्ञाय परोक्ष ( रहस्य ) , विषयात्मका , हिंसाविहारा , हि आलब्धै पशुभि , स्वसुखेच्छया यजन्ते देवता यज्ञै , प्रेत भूत पतीन्, खला , ( ७० ), 'इष्ट्वेह देवता यज्ञै ग त्वा रस्यामहे दिवि, तस्यात इह भूयास्म महाशाला महाकुला '—एव पुष्पितया वाच व्याक्षिप्तमनसा नृणा, मानिना चातिस्तब्धाना 'मद्' वार्ताऽपि न रोचते , वेदा ब्रह्मात्मविषया , त्रिकाड विषया इमे , परोक्षवादा ऋषय , परोक्ष 'मम' च प्रिय , किं विधत्ते, किं आचष्टे, किं अनूद्य विकल्पयेत ?—इत्यस्या (श्रुते ) हृदय लोके नान्यो 'मद्' वेद कश्चन, 'मा' विधत्ते, ऽभिधत्ते 'मा , विकल्प्यापोह्यते तु 'अह'—एतावान् सर्ववेदार्थ , शब्द आस्थाय 'मा , भिदा मायामात्र अनूद्य, अन्ते प्रतिषिध्य, प्रसीदति" (भा० स्क० ११ अ० २१ ) । "प्लवा हि एते अदृढा यज्ञरूपा , अष्टादश उक्त अवर येषु कर्म , एतत् श्रेयो येऽभिनन्दन्ति मूढा , जरामृत्यु ते पुनरेवापि यति , अविद्यायामतरे वर्त्तमाना , स्वयधीरा , पडितम्मन्यमाना , जघन्यमाना , परियन्ति मूढा , अन्धेनैव नीयमाना यथाऽन्धा , अविद्याया बहुधा वर्त्तमाना , वय कृतार्था ,इत्यभिमन्यन्ति बाला ; यत् कर्मिणो न प्रवेदयति रागात् , तेनआतुरा , क्षीणलोका च्यवते , इष्टापूर्त मन्यमाना वरिष्ठ, नान्यच्छ्रेयो वेदयते प्रमूढा , नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा, इम लोक हीनतर वा विशति , तप श्रद्धे ये ह्युपवसति अरण्ये, शाता विद्वास भैक्षचर्या चरत , सूर्यद्वारेण ते विरजा प्रयाति यत्र अमृत स पुरुषोऽव्ययात्मा" ( उप० )। (८०)। ( २ ) 'पोषकाणा' च वर्णन, यो वैश्य,'

इति कथ्यत, कुटुम्बाना तु भर्तृणा 'गृहिणा' आश्रमेण च, सम्पाद्यते शुभो 'वार्त्ता व्यूहो' लोकस्य धारक , अन्नाद्यो वस्त्रद प्राणपुष्टिद सर्वदेहिना,कृषि गोरक्ष वाणिज्य कला शिल्पादि वर्धन । "वार्त्तामूलो ह्यय लोक , तया वै धार्यते जगत् , कृषि गोरक्ष वाणिज्य लोकाना इह जीवन" ( म० भा० शा० ), "सन्दारमिका सुवि मलर्यसुधा निधान उद्गीथरम्यपदपाठवता च साम्ना,देवी त्रयी भगवती,भवभाव न च 'वार्त्ता' च सर्वजगता परमार्त्तिहन्त्री" (दु० स०)। "गृहस्थ आश्रित्यान्ये हि त्रयो वर्तन्ते आश्रमा आश्रित्य मातर यद्वत् जीवन्ति अखिलजन्तव " (म०भा०) "यथा नदीनदा सर्वे समुद्रे यान्ति सस्थिति, तथैवाश्रमिण सर्वे गृहस्थे यान्ति सस्थिति , यथा वायु समाश्रित्य वर्तन्ते सर्वजन्तव , तथा गृहस्थमाश्रित्य वर्तन्ते इतर आश्रमा , यस्मात् त्रयोऽप्याश्रमिण , ज्ञानेनान्नेन चान्वह,गृहस्थेनैव धार्यन्ते, तस्माज्ज्येष्ठाश्रमो गृही सर्वपामपि चैतेषा, वेदश्रुतिविधानत , गृहस्थ उच्यते श्रेष्ठ , स त्रीन् एतान् बिभर्ति हि , ( ९० ), स सधार्य प्रयत्नेन 'स्वर्गमक्षय' मिच्छता, 'सुख चेहेच्छता 'नित्य योऽधार्यो दुर्बलेन्द्रियै , ऋषय , पितरो,देवा भूतानि, अतिथयस्तथा, आशासते गृहस्थेभ्य , तेभ्य कार्य विजानता" (म०)।

(४) 'सहायकाना वर्णन, 'शूद्र' व्यपदिशन्ति य , 'सन्यास'आश्रमतश्चापि, 'सेवा-व्यूहो' विधीयते । 'शारीरेण' श्रमेण ये सदा (द्दु अ)यन्ते तु 'सेवका ', स्व च, त्रीन् अपराश्चापि, सर्वभारसहा हि ते, समान 'भाग'-वन्त सेवन्ते यतय पुन , सर्वमेव भवेयुस्ते 'यमिनो' 'यतयो' यदि 'अहिंसा, सत्य, अस्तेय, ब्रह्मचर्यापरि-ग्रही''—न्त मनुना प्रोक्ता , तथान्यैश्च महर्षिभि , सन्यासिना मुमुक्षूणा योगिना च यमा सदा , "शौच सतोष तपासि, स्वाध्यायश्च निरतर, ईश्वरप्र-णिधान च, नियमा" इति कीर्त्तिता (यो० सू०)। आशीर्वादस्वरूपास्ते, शुभा-शुभ्याभसत्तरवरा , करुणामूर्त्तय सर्वे, सर्वभूतहिते रता ,समाजमनुगृह्णन्ति शुभध्यान बलेन वै , शान्ति च सौमनस्य च मुनय , प्रशमान्वया , विस्तारयन्ति सर्वत्र, स्व 'प्रसाद' प्रभावत , (१००), "मैत्री दया मुद् उपेक्षा भावनाना बलेन तु, सुखि दुःखि शिष्ट दुष्टेषु, भवेच् चित्त प्रसादन'" (यो० सू०)। न मण्डलीशा , नैवापि बहुसम्पत्तिधारिण , ससारव्यवहारेषु विनिमग्ना दिवानिश, मिथ्यावेशा ,जलपूका , मिथ्यावैराग्यजल्पका , सर्व'धर्म' विहीनाश्च नियमैश्चापि सर्वथा, कुर्वन्त कपटा-चारा सदा "सौहृददम्भन " (म०), सीताया छलने चापि हरणे, रावणो यथा,

वेश कृत्वा, "जलशुचि , शुद्ध दन्, राक्षस ,शिखी, जटापूको, अक्षमालावान्, धारयो मृद् अलाबुन , कमण्डलु कपालेन शिरसा च मुण्डावना, मन्त्रस्य हाक्षिके यन्त्रे, मात्रा समाड्य, दण्डवान्, मन्त्रान् उच्चारयन् मिथ्या, धारयन् मस्करिमत, वदन बहुलिस्फोट, भ्रूक्षेप च विलोकयन्, सदिद्दर्शयिषु साम, निजुहषु क्षपाटता" (मट्टि०) , न सम्प्रदायप्रचाया वा मुक्तामणिविभूषिता , न वा 'नगद्गुरु'म्मन्या , 'प्रतिवादिभयङ्करा ', 'सर्वतन्त्रस्वतन्त्रा ' वा,'सर्वविद्यार्णवा ' न च, न 'शास्त्रसार्व भौमा ' वा , किन्तु सर्वाभयकरा , शमकराश्च सर्वत्र, शङ्करा , शरणकरा , अपि निष्किञ्चना , शाता , रागद्वेषविवर्जिता , न्यस्तससारकार्याश्च , सर्वत्र समदर्शिन , मैत्राश्च करुणाश्चापि सर्वेषा हितचिंतका । (११०)।विरला साम्प्रते काले ईदृशा किन्तु भारते । सन्ति बहु इन्द्रियप्रवामा, मोघज्ञाना, अधायुष , धर्म विषय विषव , स्वकर्त्तव्यपराङ्मुखा , असन्त , सद्गृहस्थाना भारीभवितु इच्छव , स्वय गृहे न तिष्ठन्त , नार्जयन्तश्च जीविका गार्हस्थ्यवृत्तिभि सम्यक् , 'भिक्षा' इच्छति भूयसीं , आदराश्च, प्रणामाश्च, वैराग्यआडम्बरेण वै, वृद्धेभ्योऽपि गृहस्थेभ्यो,युवानो यदपि स्वय , ईदृशाश्च दुराचारान् प्रायशोऽप्याचरति ते , जल्पति अनल्प तर्कैश्च विरोध ज्ञानकर्मणो ,स्वाश्चाऽपि ज्ञानिन ख्यापि, कर्मभ्यो विरतास्तथा , कर्मिभि प्रापिता भिक्षा भक्षयति सुखेन तु , एषा ये सस्कृताभिज्ञा ,बृहद्ग्रन्थान् लिखति ते, श्रुतिवाक्यै स्थापयितु विरोध ज्ञानकर्मणो ; "विरजेद् यदह , तद्य तदह प्रव्र जेद्" इति (जा० उ०) , सत्यमेव विरक्तश्चेत्, प्रव्रजेत् शुकवत् ननु , न तु सत्य विरज्यते, भोक्तुमिच्छति केवल विना परिश्रमेण , अन्यै श्रमिभि पुनर् अर्जित , (१२०) , अपक्रान्त कषायास्ते, बहि काषायवेशिन ,वेशप्रजीवा यथा वेश्या, काषा यप्रजीविकास्तथा, अवीतरागद्वेषाश्च, दम्भाहकारभाविता ,प्रव्रजन्ति अधो मोक्षकामा , यथाऽऽह भगवान् मनु । यदि कोऽपि विरोधोऽस्ति ज्ञानस्य किल कर्मणा,नून महान् विरोधोऽस्ति सत्ज्ञानस्य कुकर्मणा , यद्वा ज्ञानस्य विदुष विरोधो मूर्खकर्मणा , वार्धक्यस्य यौवनेन यथैवाऽस्ति तथा ह्यय , अप्राप्य यौवन, नैव कश्चित् स्थाविर अश्नुते , "नाऽनुभूय, न जानाति जन्तुर् , विषयतीव्रता ,निर्विद्येत स्वय तस्मात्, न परैर्भिक्षधी पुन " ( भा० ) । ऋणानि त्रीणि अनियात्य, "मोक्षमिच्छन् व्रज त्यध " (म०) रागान्, त्रिषु आश्रमेषु एव भुक्त्वा भुक्त्वा विरज्यते , ग्लानिरुप यते मिष्टेऽपि अन्ने, ननु, अतिभोजनात् , विरज्य प्रव्रजेत् नून ; नान्यथा मुक्ति

माप्नुयात् । मुक्तात्मस्तु येऽभूवन्, अपवादाः हि ते ध्रुवं, उत्सर्गस्य ; अपि सर्वेषां नियमानां तु बाधकाः अपवादाः सर्वत्रैव-नियमोऽयमपि दृश्यते । चतुर्भिराश्रमैरेव ज्ञान-कर्म-समन्वयः, मनुना साधितः सम्यग् ; तत्रान्यैर्मुह्यते वृथा । ( १२० ) । विरोधो दृश्यतो ह्यासां; ज्ञानस्यैवानुरोधतः, धर्म्यं च सत्फलं कर्म सम्पद्येत ; न चान्यथा । "न ह्यनध्यात्मवित् कश्चित् क्रियाफलं उपाश्नुते" (म०), आत्मज्ञानानुसारेण समाजस्थापनं शुभं ; "विद्यया औपनिषद्या यत् क्रियते कर्म, तत्", ननु, भवेत् शुभतरं चापि, तथैव "बलवत्तरं" (छा०); "यं धर्मं तु व्यवस्येद् वै एकोऽपि अध्यात्मवित्तमः, स एव स्यात् परो धर्मः, तं धर्मं न विचालयेत्" (म०,याज्ञ०), वृद्धो, ऽनुभववान्, ज्ञानी, तपस्वी, व्यसनवाँश्च वा, यतिर्वास्तु समीचीनं कर्म भवेष्टुं हि शक्ष्यति । अन्यत् निदर्शनं तत्र ; मुनयः ब्रह्मवादिनः, वसिष्ठश्चापि व्यासश्च तथान्ये परमर्षयः, गृहस्थाः एव सन्तः ते ब्रह्मज्ञानप्रवर्तकाः ; तथैव राजा जनकः शुकादीनां च देशकः ; अतएव मनुरप्याह, "ज्ञानेन, अन्नेन च, अन्वहं, गृहस्थेनैव धार्यन्ते यस्मादपि आश्रमिणोऽपरे" ; ईश्वरावतारभूतश्च कृष्णः शास्ति तथैव हि, स्वयं महागृहस्थः सन्, वेदान्तानां परो गुरुः, अर्जुनं कर्मणि क्षात्रे वेदान्तेनैव योजयन्, "गुह्यात् गुह्यतमं शास्त्रं," अध्यात्मं शास्त्रं अशिक्षयत्, तेनैव निर्णयं कुर्वन्, संशये धर्म्यकर्मणः (१४०) । यो ब्रह्मचारी गार्हस्थ्यं न इच्छेद् धारयितुं खलु, "नैष्ठिकं ब्रह्मचर्यं"स कुर्याद्,(आज्ञा तथा मनोः), गुरौ वसन्,तथाऽभ्यसन् विद्यास्तु विविधाः शुभाः ; "यदि तु आत्यन्तिकं वासं रोचयेत गुरोः कुले,युक्तः परिचरेद् एनं, आ शरीरविमोक्षणात् ; अनेकानि सहस्राणि कुमारब्रह्मचारिणां, दिवं गतानि विप्राणां, अकृत्वा कुलसंततिं" (म०); गार्हस्थ्ये धारयित्वा, यः न्यसेत्,'सन्यासि-' नाम सः विन्द्याद् ; उचितं तत् स्यात् , नान्यथा हि उचितं तु तत् । 'नैष्कर्म्य'-शब्दस्यार्थेऽपि बहवो भ्रान्ति आगताः ; बन्धनिर्मोचकं कर्म 'निष्कर्म'-इति हि भण्यते, संकेतेन, आत्मज्ञानस्य ; बन्धकं कर्म, 'कर्म' वै । "सुखाभ्युदयिकं चैव, नैःश्रेयसिकमेव च, प्रवृत्तं च निवृत्तं च", द्विविधा कर्मणो गतिः, (म०); उभयं न समं अदिष्टं ज्ञानेनैवात्मदर्शिना,आत्मनश्च गतिं सूक्ष्मां संसारे बहुदर्शिना, तत्कथाभेदज्ञातानां आश्रमाणां विवेकतः । साम्प्रतं अद्य सर्वेऽपि राजभृत्यत्वं इच्छवः,स्वस्वभावोचिताः नैव लभ्यन्ते वृत्तयो यतः ; (१५०) न चैव बहुकोटिभ्यो राजभृत्यत्ववृत्तयः दातुं शक्याः; ततो वृत्तेः अभावः दृश्यतेऽधुना, सुदुःखजनता

10|63

चापि, सर्वत्रैव हि भारते, सुष्टिमात्र धनाढ्यास्तु, दरिद्रा कोटिशस्तथा।

एवंहे चतुर्भिश्चेन् किन्तु समान सुव्यवस्थित, सर्वस्मिन् मानवे लोके, सर्वत्र पृथिवीतले, मर्यादितश्च सद्धर्मं वर्णाश्रमनिबन्धने, (न ह्येव 'जन्मना' किन्तु), स्वभावगुणकर्मैव, सविभक्तैश्च कर्तव्ये अधिकारस्तथैव च, परिश्रमैश्च तन्मूल्ये — दु:ख अल्पतर भवेत्, यावच्छक्य मनुष्याणां, सर्वोऽपि सुखमाप्नुयात्, सर्वोऽपि कार्यं, वृत्ति च, लभेत स्वोचिता अपि, शान्तिश्च भूयात् सर्वत्र, सौमनस्यं च सर्वदा। "नाऽब्रह्म क्षत्र मृध्नोति, नाऽक्षत्र ब्रह्म वर्धते" (म०), नार्थस्य उभय जीवेत्, नान्यत्र नित्य चरेत्, "ब्रह्मणा विहिता वर्णा लोकत्रय अभीप्सता, यदि इद पुरुषणं स्यात् जगत्, सर्वं विनश्यति, यदि ते ब्राह्मणा न स्यु ज्ञान योग यज्ञा सदा, उभयोर्लोकयो, देवि! स्थितिर्न स्यात् समासत, यदि नि क्षत्रियो लोके, जगत्स्यात् अधरोत्तर, रक्षणात् क्षत्रियैरेव जगत् भवति शाश्वत; (१६०), तथैव, देवि!, वैश्याश्च लोकयात्राहिता स्मृता, अन्ये तान् उपजीवन्ति प्रत्यक्षफलदा हि ते, यदि न स्युस्तु ते वैश्या, न भवेयुस्तथाऽपरे तथैव शूद्रा विहिता सर्वधर्मप्रसाधका, शूद्राश्च यदि ते न स्यु, कर्मकर्ता न विद्यते, त्रय पूर्वे शूद्रमूला, सर्वकर्मकरास्तु ते" (म० भा० अनु० २०८)।

आशासन

ॐ चतुर्वर्गेषु सम्पुष्ट समाजोऽयं भवेदिह, सदा सर्वाङ्गसम्पन्न, तपस्तु कृतश्रम, पर्यन्ता 'ज्ञानिनो'ऽस्माकं, धीरा वीराश्च 'रक्षिण', 'पोषका' श्चाभिवर्धन्ता प्रीता 'समाधका'स्तथा, 'दातारो नोऽभिवर्धन्ता, मा च याचिष्म कञ्चन", व्यूढा सर्वेऽभिवर्धन्ता चत्वार मिलिता सदा, अन्योऽन्य अनुरक्ताश्च, परस्पर अनुमता, यथैकदेहस्याङ्गानि सुपुष्टानि सुखैषया, 'सत्य'मेव युग चास्तु 'कृत'मेव हि भारते, तथाऽखिले मनोर्वंशे दृशार्णे 'सर्वत स्मृते'। "रुच नो धेहि ब्राह्मणेषु रुच क्षत्रेषु न कृधि, रुच विश्येषु, शूद्रेषु, मयि धेहि रुचा रुच" ॐ। (१६९, आदित २०१०)।

ॐ ७ अध्याय

शङ्कासमाधान

शङ्का काश्चित् समाधातु, प्रश्नान् उत्तरमेव च, अध्यात्मशास्त्रसिद्धान्ते, अतोऽग्रे प्रयतिष्यते। चिकित्साया उपायो ऽत्र प्रोक्तो, यदि न रोचते, अवश्य चिन्तनी

असतश्च निवारयेत्'' (म० भा०), क्षतात् कृशाश्च त्रायेत,स 'क्षत्रिय' इति स्मृत , दुर्बलाना क्षतात् त्राता, क्षेता च उद्धतपापिना, क्षन्ताऽऽत्मनि अपकाराणा,स क्षत्र पद्भाग ध्रुव । कर्षणै सिंचनैश्चापि, शालाना रचनैरपि, शार्गना गोपणैश्चापि, पृथिव्यां 'विशती'ह य , सर्वलोकोपकाराय 'विशो' यस्मिन 'विशन्ति' च, (२०), 'परि वेश यिता' (भोजयिता) ऽन्येषां यश्च'वेशा दिसाधक , शालीन शान्ते शीले स हि 'वैश्य' इति स्मृत ; चतुर्वर्णं चतुर्वर्गं चतुराश्रम-विष्टपे, स विशति विशो-यस्मिन् , स वैश्य इति वर्ण्यते , 'विश ' प्रजा ,'विशो'ऽन्नानि,धनानि च 'विश ' स्मृता , ''विश त्वा सर्वा वाञ्छतु मा त्वद्राष्ट्र अधिभ्रशत् (य० वे० अ० १०), ''विशि प्रतिष्ठितो राजा''—श्रुतिष्वेव तु पठ्यते ( य०वे०; अ०वे० २०), 'विश ' एव स्मृता भार्या पृथिव्या 'वेशनाद्' इति; 'शालीन त्यान् तथा चऽर्दौ ,'ग्रास्ये स्य ' च विवेकत , 'व्रातै ', 'समूहै ', गच्छन्ति, 'व्रातेन' अपि दिने दिने 'भृत्या' जीवन्ति, चार्हन्ति 'व्रते ' प्राप्तु तथाऽर्यता, सत्कारेण नवीनेन, 'व्रात्या ' ते खलु मानवा ,ईदृशाना तु य स्वामी स 'आर्य ' इति कथ्यते, पाणिनीय तथासूत्र— ''अर्य (स्यात्) स्वामि-वैश्ययो '' , आर्यो ऽर्य एव , शब्दोऽय निष्पन्नो हि 'ऋ'-धातुत , गच्छति, 'इर्यर्ति', देशान् यो नवीनान् वासयन् अपि , निवारणाय चा ऽर्त्तीना' 'अर्त्तु'' योग्यो भवेत् तु य , 'अर्यते' सतत चऽर्तैं ', स 'आर्य ' इति क थ्यते , 'अर्यत्वात्' चाय अन्येषां 'स्वामा भवितु अर्हति । ( ३० ) । ईदृशेभ्यो हि वेदाज्ञा, ''इन्द्र वर्धन्तो, अप्तुर , कृण्वतो विश्वं आर्य, अपघ्नतो अराव्ण.'', 'चरेम भूमौ, इत्येव सोम प्रार्थयत, द्विजा !, सोमसे , सौम्यभावैर, हे आर्या !, चरत भूतले, हे सोम !, ओषधिराजस्त्व, तथाऽस्मान् ऊर्जयस्व यत्,इन्द्र, स्वकीय राजान वर्धयन्त सदा, यय, आप्नुवतो (अप्तुर) सर्वान् देशान् , यास्यॉन्त्र निवासिन , यास्यत्नोमशादिविधिभि प्रापयत सद्आर्यता,अरीणा (अराव्णा ) शत्रुता चापि घ्नत , तान् मित्रभावना नयतो, विश्वं अपि आर्यं क्रमेण एवं कृर्णमहि' (ऋग्वेद,पवमान-सोमसूक्त, म० ९, सू० ६३, म० ५) । त्रयोऽप्येते 'द्विजा.' ज्ञातार , कृतऽऽत्मकृत सुहृय , चतुर्थं 'एक जातो' यो,नऽसमदर्शी च बालवत्, ज्येष्ठाना किंकरश्चापि, 'द्रवति आशु' तद्आज्ञया कर्तु तेषा सहाय य , स हि 'शूद्र' इति स्मृत , शुचा ऽल्पया द्रवेद् यस्तु, सेवया द्रावयेच्च ता, अन्येषा,यश्च पोष्यो य शिष्य , शूद्रो हि स स्मृत , ''अवश्य भरणीयो हि वर्णानां शूद्र उच्यते '' (म० भा० शा०) । एष

महाध्यां शब्दास्ते सर्वेऽपि भ्रष्टतां गता ,यथोत्तमानि वासांसि जीर्णानि बहुकालतः, दुष्प्रयोगेण च अस्थाने, मवति, मलिनान्यपि , (४०) , न शूद्रात्, न शूद्राणि, न धर्मात् 'वर्णधर्मिणः' ते । सर्वेषामपि कर्माणि सर्वे कुर्वंति साम्प्रतम्—अध्यापनं, शस्त्रकार्यं, कृषिवार्त्तं, च सेवनम् , "सर्वे सर्वाण्यपत्यानि वर्णाः सञ्जनयन्ति हि , कृतकृत्याः सर्ववर्णा यदि वृत्तं न पश्यति" ( म० भा० )—इत्येव अजगर् सर्प रूपिण नहुष नृपे, युधिष्ठिरो धर्मराज ,यथा वै भारते कथा । अन्यत्रापि दृश्यते देशविराट् एवानवस्थितिः , सर्व'जाति'षु सर्वेऽपि 'वर्णाः' प्रयत्नेन स्थिताः , मन्येव भारते सुख सर्व'जाति'षु 'पण्डिता', 'महाराज'पदधाश्च 'भूमिपाः' सर्व'जाति'षु, 'धनसंग्राहका'श्चापि, धनभृत्यपि 'सेवका' । 'वृत्ति संकर'रूपोऽयं गर्दभः 'वर्णसंकर' । विवेकार्थं अतो धर्म कर्मादीनां स्वभावतः ,चत्वारो हि यथा शब्दाः ,धर्म-कर्म अवबोधका , जीविकाद्योतका , वृत्तिविभागस्यापि साधकाः, अर्थगर्भाः ,सता मस्य व्यवस्थार्थं अपेक्षिताः । शिक्षका रक्षकाश्चैव,पोषका ,धारका अपि, ज्ञानदा , प्राणदाश्चापि, अन्नदाश्च, सहायदा , बोधिन , पुष्टिमन्तश्चापि, गुणिन , श्रमिणस्तथा , (५०) , शास्त्रिण , शस्त्रिणश्चापि, धनिन , धारिणोऽपि च , वर्चस्विनश्च, तेजस्वि महस्वन्तौ , वरस्विन , तपस् , सहस् , तथैव ओजो , रहो , येषां भवेत् क्रमात् , विद्वांसश्चैव,वीराश्च, वदान्याश्चापि,सेवका , धार्मिणो, धर्मिणश्चापि, धर्मिणो ( पुण्यवत ), श्रमिणस्तथा , प्राज्ञा , शूराश्च, दक्षाश्च, द्युतिमत्तम्रवर्धन च , विद्यो पजीविनश्च एके, अपरे रक्षोपजीविन , वार्तोपजीविनश्चान्ये,चतुर्था भृतिजीविन — एव मनागम्भीरा , स्वस्वधर्मावबोधका , कृत्यम्भारयितारश्च,नैषोऽस्त्यालवर्जिता , चतु शब्दचया , उक्ता , अन्ये वा तादृशा अपि, व्यवहियता एतर्हि, सदायस्या-भवाय वै । चतुर्णां अन्यनामानि 'द्वीपे' 'द्वीपे', 'युगे' 'युगे', पुराणेष्वितिहासेषु सत्येव उक्तानि भूरिशः । यथा कौर्मे तु, वा झुसे, शाल्मलौ च, कुशे क्रमात्, क्रौंचे, शाके, तथा गोते, वर्णाख्या समवन्ति हि—"आर्यका ,कुरराश्चैव, विदेहा , भाविनस्तथा,ब्रह्म क्षत्रिय विट् शूद्रा प्लक्षद्वीपे प्रकीर्तिता , कपिला ,अरुणा ,पीता , कृष्णा ,द्वीपे शाल्मलौ, द्रविणा ,शुष्मिण , स्नेहा ,मदेहा च,तथा कुश,(६०), पुष्कला ,पुष्करा ,धन्या ,तिष्या ,क्रौंचे,क्रमेण वै, मृगाश्च,मगधा ,शाके , मानसा , मन्दगा तथा ,श्वेते अवर्णा श्वेतवर्णा प्राप्तस्त्रिगुणवर्जिता " ( कूर्मपु० अ० ४९ ) । एव 'द्वीपेषु' सर्वेषु क्रमशो वर्णा व्यवस्थिता । सर्वदेशेष्विदानीं च, प्राय सर्व-

नृजातिषु, चत्वारो मुख्यतो हिन्दूसे, उक्ता अपरनामभिः, समाजकार्यव्यूहार्थं, न स्पर्धार्थं परस्परं, यथा प्राचीन 'पपु' अर्वाचीनेष्वपि वै तथा। पश्चिमेषु आङ्ग्लभाषाया तेषां संज्ञा प्रकीर्तिता –प्रीस्ट सोल्जर मर्चेण्ट वर्कमान' इति नामभिः ;'हर्जी नो -रम-चामन्स्'च'हेश्वरर्'इत्यपि वै तथा, पार्स-मिस्र अर्व देशेषु, मुहम्मद् अनुयायिषु, 'आलिम्', 'आमि ', तथा 'ताजिर्', 'मज़्दूर्' इति च शब्दिता, पारसीकेषु 'ज़र्थुश्त'मुनिधर्मावलम्बिषु, 'अथर्वन अरथस्तार-वस्त्र्य हूतिश्' इतीरिताः, जापाने 'निपुण' द्वीपे, 'शिंतो' धर्मावलम्बिनि, 'सोगुन् समूरा हेमिन्'श्चापि 'युता'–इत्यादि च वर्णिता । न तु पाश्चात्यदेशेषु कृतं वृत्तिविभाजनं, विस्पष्टं बुद्धिपूर्वं च, तत्तत्-ज्ञानवशस्थिति, क्षोभं, स्पर्धां च, सवर्णं, 'वर्णानां' तु परस्परं । (७०) । एतत्सर्वं समालोच्य, समीक्ष्य च परीक्ष्य च, नूतनैर्नामभिः सार्धं कार्यं वृत्तिविभाजनं, धारयन् 'वर्ण' नाम एकं,वृत्ति एकां च धारयेत्, सहआहारविवाहआदि,नीलभाव्येन चआचरेत्। एवं कृते सममाणा मानवानां तु समूहः सम्भवेन् मानवे धर्मे, यतो व्यापि चतुष्टयं । शेष वैष्णव शाक्तेषु, नागरान्येषु 'हिन्दुषु' सूर्याद्युपासकेषु, एव, चत्वार सति ते यथा, बौद्धा, जैना, यहूदाश्च, मुस्लिमा, क्रिस्त्वना तथा, सिक्खा च अपरधर्माण विभाज्या स्यु चतुर्ष्वपि । यथा पञ्जाबिनो, वाङ्गा, युक्तप्रान्तीयका, तथा मद्रासिनो, महाराष्ट्रा, आन्ध्रा, मारवारिणो ऽपि च, भाषमाणाश्च विभिन्ना भाषा, विविधधर्मिण, विभिन्ना बहुधाऽऽचारं, वेषभूषादिभि तथा, अन्यप्रान्तोद्भवाश्चापि, यथा सर्वेऽप्य 'हिन्दिन', ( हिन्द'देशोद्भवो 'हिन्दी', 'पंजाबी' इत्यादिवद् भवेत् ), चतुर्वृत्तिविभक्ता, स्यु चतुर्वर्णषु सगताः —तथैव च एव न स्यु यमि जापानि चीनिन, ईरानिन, तुर्किणश्च, रूसिनो, ऽफ्गानिनस्तथा, जर्मना, मिस्राश्चापि, फ्रेंचा, स्पेननिवासिन, अमेरिकानाश्चान्ये च सर्वे मानवजातिजा. ? (८०)। शास्त्रोक्ता चतुर्धा एव "पृथिव्या सर्वमानवा " मनुना, स्पष्टमादिष्टं चापि, "नास्ति तु पञ्चम " (म०) । चातुर्वर्ण्यव्यवस्था इव 'सञ्चिका' (साचा) इव विनिर्मिता, मानवाना समूहोऽस्या य 'पूर्यता' ऽपि कश्चन, स एव लभते रूपं सचिकायाश्चतुर्दलं, स्वर्णकारस्य हस्तेन, वह्निना च द्रवीकृतं, सांचिकायां यथा हेम क्षिप्तं, तद्रूपभाग्भवेत्, केदाराणां यथाऽऽकारं प्लाविनं सलिलं धरेत् । पुराणेष्वितिहासेषु, नरतो 'जातय ' स्मृता', मत्स्याश्च, मगधाश्चापि, चेदय, काशिकोशला, वाह्लीकाश्चापि, गान्धारा, सौराष्ट्रा, चाथ नैषधा, कुरवो, ऽङ्गाश्च,

पगाध्ठ, चोल , पाड्याश्चैव च, चातुर्वर्ण्यं तु यथासु 'जातिषु' एतासु अभूत् सदा। अर्थोऽन्यो 'जाति'शब्दस्य, 'वर्ण'शब्दस्य चाऽन्यथा, अर्थतो सकलान्येव सजातोऽस्य सदाश्रम , यत् 'जन्मनैव', 'जायेत', 'वर्णो' भवति वै नृणाम्। 'जन्मना जातिद्' एवास्ति 'वर्णो' भवति 'कर्मणा'। (१०)। जीविकाकर्मणा वर्ण , तद् धृते अवबोधक, दृश्यते चान्यदेशेषु, भारतेऽपि पुरा तथा।

कर्मणा वर्णस्य सिद्धौ, अन्यदेशेभ्य भारतस्य को विशेष स्यात् ?

(३) प्र० भूय उत्थाप्यते प्रश्न —इत्य रीतिस्तु भूतले, विहाय भारत वर्ष सर्वत्र प्रवृत्ताऽधुना यदि जन्म तिरस्कृत्य मा पव अस्माभिश्च गृह्यते, को विशेषो भवेद् एव अस्माकं 'वर्ण'धर्मिणा ?

उ० उत्तर तत्र चैव स्यात्—जीविकाना 'विभाजन' सुचीनत, लोकानाम् च, धर्माणा,कर्मणा तथा, कृष्यानां, अधिकाराणां, श्रमस्य, अर्थस्य चैव हि,निकामाय आदित्यसृता बुद्धिपूर्व 'विभाजन', पूर्व चतुर्धेरकाना गुणभेदानुसारत —अयमेव विशेषोऽस्ति 'कर्म वर्ण' व्यवस्थिते , न ईदृश् विभाजन बुद्धिपूर्व अन्यत्र दृश्यते, राष्ट्रीयनियमेनापि, 'धर्मण' इति यथा पुरा भारतेऽभूत् पर तु अद्य सर्व सकीर्ण अत्र च। ' चातुर्वर्ण्यं मया सृष्ट गुण कर्म विभागश '' (गी०) चतुर्णाम् 'विभागेन' विना, वर्णचतुष्टये, न धर्मसम्मत सम्यक् चातुर्वर्ण्यं तु सिध्यति। एव एव नरो यत्र सर्वमेव जिघृक्षति—'सम्मान', 'इन्दिरा' चापि, 'धन', 'मोद' च, सर्वथा सर्वाक्रुष्टत्वमेव—अय प्रधानो वर्ण-संकर (१००), ईशिता 'ईश्वरभाव ' स्यात्, कृष्णेन व्याहृत यथा, 'आज्ञा शक्ति ' तु सा एवास्ति, सुश्रमीतौ यथा उदित, स व्याहृत आज्ञाना ईशित्व आज्ञा न प्रतिहन्यते यस्य, ईश्वर स एवास्ति, "समर्थ कर्तुं एव वा, अकर्तुं वा अन्यथाकर्तुं" यो भवेद् यत्र तत्र स ईश्वर स्यात्, यथा शब्दो 'महीश्वर नरेश्वरौ "ईश्वरोऽह,अह भोगी, सिद्धोऽह" इति मन्यते आसुरप्रकृति स्तब्ध ऐश्वर्यमदमोहित (गी०) 'धर्मो, ज्ञान च वैराग्य, ऐश्वर्य च इति लक्षण, रजोविद्धस्य सत्त्वस्य, योगेषु उक्त चतुर्विध (या०भा०) सात्त्विकं दैव ऐश्वर्य, भूताना हितकारि तत् आसुर तामस हि अन्यद्, परद्रोहि अपकारि च। जीविकाना, साधनाना, धर्माणा, कर्मणा तथा, कृत्याना,अधिकाराणा, मथरो वर्णसकर , विषमप्रवृत्तीना च विवाहोऽस्ति संकर , 'जाति नास्त्येव भिन्नाना उद्वाहो नास्ति संकर । कुतो न ईदृग्विभागोऽन्यदेशीयै

बुद्धिपूर्वकं, तेषां समाजेष्वप्यस्माद् दृश्यते कलहः भृशं, तथापि नास्माकमिव दासास्ते ऽन्यस्य कस्यचित्। विशिष्टधर्मता लुप्ता न, विशेषस्तु शिष्यते, यत्र जन्म वर्णता-मूढा वयं दासत्वमागताः। (११०)। 'शक'हूणाद्यः पूर्वं येऽत्र भारतं समागताः, ते 'शाक'द्वीपिनो विप्राः, क्षत्रिया वा, बुधैः कृताः, 'कायेषु', राष्ट्रकार्याणां लेखशालासु लेखकाः 'काय-स्था 'वा कार्यदक्षाः, वैश्याः शूद्रा अन्यथा कृताः, गुणकर्मानुसारेण कर्मवर्णेषु मेलिताः। 'राजपूताने' प्रान्ते च 'सन्ति' क्षत्रनामतः, 'सोलङ्की'-'परमारौ' च,'चौहान' 'पडिहारकौ', प्रसिद्धाश्चाद्य विद्यन्ते सर्वेऽपि 'अग्नि कुल'ऽऽत्मना, आख्यायिकापि चैतेषां जननस्य प्रथीयसी—विप्राणां अग्निकुण्डात् ते उत्थिताः, यज्ञकर्मणि, निरोद्धुं प्रतियुद्धेन बाह्यान् आक्रमकारिणः, यथा 'कृपया ' ऋषिमुख्यैः पुराणे सन्ति वर्णिताः। आख्यायिकाया तु अर्थोऽस्याः स्पष्टं एव हि दृश्यते—अग्निं प्रज्वाल्य साक्षित्वे, ज्ञानिभिर्दूरदर्शिभिः, महद्भिः, राजधर्मज्ञैः, भारतस्य हितेप्सुभिः, विधिवद्वेदमन्त्रैश्च धीरवीरविनिर्धनैः ,समक्षं जनतायाश्च, शूरा केऽपि अन्यजातितः, 'महाजन समारोहे,क्षत्रियत्वेन संस्कृताः, चतस्रश्च च समाजः नायकत्वे नियोजिताः, 'प्रात्यस्तोमादि' विधिभिः वेदप्रजल्पैः, यथा पुरा आर्याः, वर्धिष्णवः, "कृण्वन्तो विश्वमार्यं" प्रयेतिरे। (१२०)। विद्योपजीविनस्त्वेके, परे रक्षोपजीविनः, वार्त्तोपजीविनश्चान्ये, ऽपरे श्रैष्योपजीविनः, सर्वत्रैव हि दृश्यन्ते, न तु जन्मग्रहस्तथा, यथाऽत्र भारते वर्षे, परेषां दासतां गते। कर्म वर्णो जन्म वर्णान् यथेष्टं द्रावयति नैं, पार्थिवं चापि दधति तुर्या, हि 'अथान्ये'ष्वस्तु सर्वथा, सर्वेषु ज्या सर्वमान्या 'शक्तिः' एका एव देवता, 'अशक्तः' क्षिप्यते सर्वैः, न 'अविष्णुः'श्चापि न 'अशिवः' (देवीभा०), "पठकाः पाठकाश्चैव,सर्वे पवित्तमानिनः, सर्वेऽपि मूर्खा एव एते, यः क्रियावान् स पण्डितः, कर्मवीरं तु धर्मवीराः स्मयन्त उपासते" ( म० भा० )। "सर्वेषामेव देवानां शक्रादीनां शरीरतः निर्गतं सुमहत्तेजः, तच्च च 'ऐक्यं' समगच्छत" (दु०स०) यदा, तद्देवाभून् पूर्वं महिषासुरसूदनः। चत्वारि अपि वर्णानि ऐक्यं,शाश्वं शाश्वं धनं धर्मा ,यदा सर्वे गमिष्यति , तदा स्यात् पापनाशनः; अयमेव 'चतुर्व्यूहो'ऽवताराणां [illegible] शोभनः। उपोन्य जाति भिन्नानां तत् कथं सम्भविष्यति ?

युद्धेन वर्णसङ्करो न भवति किं ?

(४) प्र० पृच्छेयुस् तत्र केचित् तु गीताऽध्ययनतत्पराः —'युद्धेन भाविना वर्णसंकरः धर्मनाशकः',शंकां इमां अर्जुनस्य न निरास्थत् तु,तादृशं पदं कृष्ण ,

यथा, 'नैव भविता वर्णसङ्करः, (१२०) कुलधर्माः न नंक्ष्यंति, न च धर्माः सनातनाः, पितरो न पतिष्यंति लुप्तपिण्डोदकक्रियाः, पुनाश्चेत्र युद्धं न; प्रत्युत, उद्धरणं पुनः, संस्थापनं च, धर्माणां विभ्रष्टानां भविष्यति' ।

उ० शंकायाः उत्तरं हि अस्याः समाधानपरं । इदं—यद्यपि एतैर् एव शब्दैर् न तदा एवं उक्तं, तथापि अस्ति समस्यायाः गीतायाः अयं एव हि, नान्यः कश्चिद्, 'आशयस्' तु; शब्दैर् अर्थैश्च 'व्यंजितः' । तादृशीनां । शंकानां, पार्थेन उत्थापितानां हि याः, स्थाने भवि समस्तेषु युद्धेषु, अस्मिन् न कैवल्यं, सतो, न क्षत्रियैः किं, भो.!, युद्धं कार्यं कदा चन ? क्षत्ताम् त्रायते' इत्यर्थं 'क्षत्रियस्य' वृथा एव किं? "कानीनस्य मुनेः, स्वबान्धववधूवैधव्यविध्वंसिनः, नप्तारः, कुलगोलकस्य तनयाः, कुण्डाः स्वयं पाण्डवाः, ते पंच, समानदारनिरताः, तेषां कथाकीर्त्तनात् पापं नश्यति, वर्धते च सुकृतं, धर्मस्य सूक्ष्मा गतिः", इति श्लोकः प्रसिद्धोऽस्ति । युद्धात् पूर्वं हि संशयः आसीद् विजृम्भमाणो हि, भरतीर् बहुभिस् तथा; अश्वत्थामा, कृपो, द्रोणः, ब्राह्मणाः क्षत्र-धर्मकाः; क्षियाणां चापि, राज्ञां च, भूत धर्मापचारकाः, (१४०), काम-क्रोध-लोभ-मोह-मद-मत्सर-कारिताः, दुराचाराम् तु, महाकष्टं, संति व्यासेन दर्शिताः । युद्धान् प्राग् एव नहुषं सर्पं आह युधिष्ठिरः, "सर्वे सर्वासु अपत्यानि वर्णाः संजनयंति हि" । अतः समर्थयन् युद्धं कृष्णः पार्थं अबोधयत्—"यदि हि अहं न युध्यां चेद्, धर्मयुद्धं, अतंद्रितः, उत्सीदेयुर् इमे लोकाः, उपहन्यां इमाः प्रजाः, संकरस्य च कर्ता स्यां सदा; न एव प्रवर्त्तनाद्, धर्म्ययुद्धस्य, श्रेयोऽस्माल् क्षत्रियस्य न विद्यते (गी० ) । पुनश्च शोऽश्वदत् पार्थं, "ग्लानिं धर्मस्य वीक्ष्य यं, अधर्मस्य अपि च उत्थानं, आत्मानं सृजामि अहं"; तादृश्यां चापि अवस्थायां, "संभवामि युगे युगे, पुनः संस्थापनार्थाय धर्मस्य", न विनश्यते । 'कस्य धर्मस्य'—चेत् पृच्छा; 'वर्ण-धर्मस्य'—तु उत्तरं । वर्णआश्रमाणां धर्मेषु सर्वे धर्माः व्यवस्थिताः; आश्रमाणां तथा धर्माः वर्णधर्मान्तर्आगताः; चातुर्वर्ण्यआश्रितं धर्मं ततोऽसौ वक्ति विस्तरात् । नैरस्य एव हि कस्यापि वर्णस्यार्थे, प्रभाषितः गीतायां वेदसारो वै; न सन्यासिनः एव हि, सर्वथा विनिवृत्तस्य, विरक्तस्यापि कर्मणः, आश्रमांस् त्रींस् तु निर्वाह्य संस्थितस्य चतुर्थके क्षत्रियेण गृहस्थेन, क्षत्रियाय एव शास्त्रे, सादिष्टो धर्मसारो-ऽयं सर्वसंग्रहकारकः । (१५०) । यदि सन्यासिनां एव बोधकोऽयं भवेत्, तदा चातुर्वर्ण्यस्य धर्माणां कस्माद् अत्र निरूपणं ? पितामहस्य भीष्मस्य, नारदव्यासयोः-

स्य, च, युद्धेन स्थापन तेषां, युद्धान्ते विस्मरात्, पुन ? किमर्थं चापि अर्जुनाय गृहस्थाय उपदेशन, "कर्मणि एवाधिकारस्ते", "तस्माद् युध्यस्व, भारत !", "धर्म्याद् हि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते", "तस्मात्, सर्वेषु कालेषु, मा अनुस्मर, युध्य च" ? सर्वसंग्राहक धर्म, वर्णाश्रमसमाश्रय, तस्मिन् काले भूशं ग्लान, सर्वांगे चापि सर्वथा, सर्वेषु अपि विभागेषु, पुन स्थापयितु भुवि, यतोऽवतीर्णं कृष्णोऽभूत् ; सद्रूप उपदिश्य यं सात्व, सात्वत, तस्मात्, सर्वेतद् चापि, फाल्गुन, क्षत्रियस्य, गृहस्थस्य, प्रजारक्षणधर्मिण, शिष्टानां संग्रहस्यापि दुष्टानां निग्रहस्य च कर्तुं ( विशेषधर्मोऽस्ति, युद्ध कौरवपापिभि०—इति आदिदेश भगवान्, लोकशिक्षार्थं एव स । एव पूर्वोदिता शङ्का गीतायां तु निरस्यते—न भावी धर्मयुद्धेन वर्णानां खलु संकर, प्रत्युत तथा पुन सृष्टस्य सम्यग् धर्म्य विभाजन । ( १६० ) । सारो विचारस्य एतस्य संक्षेपेण उच्यते पुन —अवश्यमेव युद्धेऽपि जायते वर्णसंकर, योधानां रुधिरेण योषितासु बलात्कृते ह्रासाद् च नर संख्याया युद्धेषु मरणेन च, विहाय स्वगृहाण्यपि युद्धकार्येषु मग्नैः, अरक्षितासु अत स्त्रीषु व्यभिचारस्य वर्धनात्, किंतु एतस्य प्रतीकारो, नाह युद्धात् पलायन, अपि तु स्थापन भूयो, युद्धेषु शमितेषु यं, व्यवस्थाया दृढतर वर्णानां कर्मणैव हि । जामदग्न्य क्षात्रवर्थे घोर युद्धं ना समापने, नूतन वर्णनिर्माण कश्यपेन यथा कृत । एवमेवाभिमन्यातामामे यास्यति न्यूनता, स्वल्पीभविष्यति यत सर्वे कल्हहेतव. ।

वर्णपरम्परा व्यर्था किं ?

(५)प्र० सत्यस्तेऽत्र केचित्तु, विना हेतु अतिस्वरा —निरर्था, निष्प्रभावा वा, किन्तु वर्णपरम्परा ? 'येनास्य पितरो याता, येन याता पितामहा, तेन यायात् सतां मार्गं, तेन गच्छन् न रिष्यते'(म०), इति यत् मनुनाऽदिष्ट व्यर्थमेवास्ति किन्तु तत् ?

उ० तत्र एतद्धि समाधान —न एतत् व्यर्थ कथंचन, मूल आप्तोपदेशोऽयं न केनापि निरस्यते, अर्थोऽस्य पूर्वमेव उक्त, 'उत्सर्ग' तादृशो भवेत्, प्राय 'सामान्य'-रूपश, साधारणजनार्थक, किंतु तत्र अपवादा ये, 'विशेषो'न्मेष-कारिता, येषु केषु, यत्र तत्र, न उपेक्ष्या तेऽवहेल्या । (१७०) । प्रकृते 'सूचक' जन्म, कर्म 'निर्णायक' पुन । पुत्राय चेत् पितु 'कर्म' स्वभावेन एव रोचते, करोतु अवश्य तद् श्रय, न केनापि निवार्यते । उत्तमा जन्म कर्मभ्या, कर्मणा एव तु मध्यमा, निष्प्रा एव केवल जात्या, वर्णवृत्ता स्मृता बुधै । नैसर्गिकी प्रवृत्तिश्च, तथा वर्णपरम्परा,

मिलिते चेत् उभे, सुखं, 'स्वर्णे सौगन्ध्य' अस्ति तत्। प्रकृतिः आकृता यत्र भिन्ना वशक्रमात्, तत्र प्रवृत्तेर् स्वभावानुरूप जीविका, वर्ण एव च। ततश्च पुराणेषु दृष्टान्ता वर्ण पर्यये। 'उत्सर्गाणां' तु सर्वेषां 'अपवादा' भवन्ति वै। अवश्य 'नियमो' मान्य, मान्यो 'बाधो'ऽपि, हेतुना, साधारणासु अवस्थासु नियमस्य प्रवर्त्तेन, विशेषासु, अपवादा हि प्रभवन्ति एव सर्वत्र। "अन्यो धर्म समस्थस्य, विषमस्थस्य चाऽपर, न कोऽपि आत्यन्तिको धर्म, धर्मो हि आवस्थिक स्मृत" (म०भा०), सम्पत्काले यथा 'उत्सर्गा', 'विपरीता' स्तथाऽऽपदि, नियमा एव नियमान् बाधन्ते; नियमो हि असौ अपि अस्ति, स च सर्वत्र प्रभवन् तु मन्यते। "नहि सर्वहित. कश्चिद् आचार सम्प्रवर्तते, तस्माद् अन्य प्रभवति, सोऽपर बाधते पुन, (१/०), आचाराणां अनैकाग्र्य तस्मात् सर्वत्र लक्ष्यते" (म०भा० शा०), निमित्तानि समीक्ष्यापि, देशकालौ अवेक्ष्य च, समाजस्य हिता धर्मा कल्पनीया सदा बुधै। "स्त्रियो, रत्नानि अथो विद्या, धर्म., शौच, सुभाषित, विविधानि च शिल्पानि, समादेयानि सर्वत" (म०)। चिरकालात् कुले यस्मिन् प्रथिता एका परम्परा, वर्तते चापि कर्म एव जीविका वृत्तिसाधक, त्रिगुणेषु एक गुणस्य प्राधान्य विशेषत, मतौ मतौ सन्ततौ च, यद्यपि तद्गुणसभव, किंतु सभव एवास्ति, न पद्राचन निश्चय, नियमस्यास्य भगो हि बहुधा दृश्यते धरा,। महर्षिभ्य पुरा जाताः सुरा दैत्याश्च, राक्षसा, ऋषय, क्षत्रियाश्चापि, विट्शूद्राः अपि जज्ञिरे, कुले विद्याविहानेऽपि भवन्त्येव तु पण्डिता, यथो तथैव शूराणा जायते भीरवोऽपि वै, भीरूणां च कुले वीरा उत्पद्यन्ते पुन पुन, विद्याभ्यासि कुले मूर्खा. जायन्ते बहुशस्तथा, सदाचारि कुले चापि दुराचारा भवन्ति हि, कुले व्यापारदक्षाणां, सम्पन्न् नाश करा अपि, दरिद्राणां तथा यथो, श्रीनिकेता पता कदा, (१९०), प्रेष्याणां किंकराणां च,दक्षा, वीराश्च, पण्डिता, राजवंशकृतश्चापि सन्ति शूद्रेभ्य उत्थिता। प्रत्यक्ष प्रतिपद एतत्सर्वं तु दृश्यते। "ऋषीणां च नदीनां च जन्मस्थान न विद्यते" (म० भा०)—इति पौराणिकी गाथा साक्षाद्वेदानुमूलने। "जन्माद्यस्य यत", ब्रह्म, सर्वत्रोन तु, सर्वदा सर्वत्र व्यापक यस्मात्, त्रिगुण त तथैव हि संसृष्ट चापि सर्वत्र, तस्मात्सर्वत्र सभव सर्वेषामपि वर्णानां, सर्वेषु नृकुलेष्विति। वैदिक शाश्वत चापि यत्कि एतद् हि एव रूपक—एकस्यैव पितु वर्णा चत्वारो 'ब्राह्मण' सुता। कश्यपस्य ऋषेर्ज्येष्ठो हिरण्यकशिपु सुत, सर्वे-

णामेव लोकानां मूर्धा वृद्धजरोऽसुरः; हिरण्यकशिपोश्चापि प्रह्लादः साधुपूजितः, पूर्णे-न्दुविमला कीर्तिर्यस्याद्यापि विस्तृता; पुलस्त्यस्य ऋषेः पौत्रो रावणो लोक-रावणः; भ्राता विभीषणोऽप्यस्य, कुबेरश्च धनाधिपः। वर्णधर्मस्य, योग्यत्वे, व्यभि-चारि एव कारणं दृश्यते जन्म; नान्वेति; नैव वा व्यतिरिच्यते; न हि शूरस्य पुत्रोऽपि सर्वदा शूरः एव हि; (२००); न वार्त्ताकुशलस्यापि सुतोऽर्थकुशलः सदा; न प्रेष्यस्य सदा पुत्रो विद्याः शिक्षितुं अक्षमः; न च विद्वत्सुतो विद्वानेव सर्वत्र लभ्यते। स्वभावजा प्रवृत्तिर्या सैव योग्यत्व-कारणं; अन्वयाद् व्यतिरेकाच्च सर्वदा सहचारि तत्; तत्तद्योग्यत्वमेवास्मिन् तत्तद्वर्णस्य कारणं; "सम्यक्त्वायनमं, धर्म्यं, सुसुखं कर्तुं, अव्ययं ×, चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः, × कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः"। जन्मनि अपि तु कर्म एव हेतुः वेदविनिश्चितः; न जन्म दृश्यते तद्वत् सद्-असत्-कर्म कारणं। "स्वकर्मणा सर्वसिद्धिं अमरत्वं लभेद् ध्रुवं, सुरत्वं च, मनुष्यत्वं च, सुरेन्द्रत्वं लभेत् नरः, विष्णुत्वं च, शिवत्वं च, गणेशत्वं तथैव च" (दे०भा० स्कं० ९, अ० १७-१८-२०)। पर्यायशब्दाश्चत्वारः, "क्रतुः, कामो, यशो, अपि असुः" (ऐ०उप०), "क्रतुमयो हि पुरुषः", "यो यच्छ्रद्धः स एव सः", (छां० उ०; गी०) "यथाकामो हि पुरुषः, भवेत् तत्क्रतुरेव सः, तत्कर्म कुरुते चैव; यत् कर्म करोत्यसौ अभिसम्पद्यते चायं तदेव" इति श्रुतिर्जगौ (बृ०उप०)। (२१०)।

### कर्मणा वर्गो, विवाहादि कथं भवेत् ?

(५) प्र० केचित् तत्र विशंकन्ते—विवाहादि कथं भवेत्, सहआहारो विहारो वा, वसनं चाऽऽसनं तथा, जन्मवर्णव्यवस्था चेत् समग्रा परिवर्त्यते ?

उ० उत्तरं सरलं तत्र—शीलव्यसनसाम्यतः; अनुकूलं ययोः शीलं, सख्यादि व्यसनं तथा, तयोरेव मिथः पाणिग्रहणं तु प्रशस्यते; "विशिष्टायाः विशिष्टेन संगमो गुणवान् भवेत्" (म०भा०नलो०); परीक्षा जन्मपत्राणां ज्यौतिषैर्यत्तु कार्यते कुलैः, सम्बन्धमिच्छद्भिः, इदमेवात्र कारणं, निश्चीयेत गुणानां यत् साम्यं हि वरकन्ययोः, सहधर्मचरौ स्यातां, मा द्विषातां च दम्पती, "अन्यो-ऽन्यस्याव्यभीचारो भवेद् आ-मरणान्तिकः" (म०), तदूर्ध्वं अपि वा सङ्गो "भवेज्जन्मनि जन्मनि"। एवं च शीलसाम्येन भोजने सख्यं दृश्यते, सात्त्वि-कानां, राजसानां, तामसानां तथैव च। 'ज़मीदारो' यदि पिता, पुत्रश्च एको-

ऽय 'डाक्टर', 'प्रोफ़ेसरो' द्वितीयश्च, तृतीयश्च 'वकील', 'दूकानदार' चतुर्थश्च, 'रिसालदार'श्च पंचम , पुत्रिका पंचचाश्चापि, भिन्नप्रकृतिकास्तथा , पञ्चो, ऽपत्यानि चामीषां पुत्राणां हि,महाकुले—किं सर्वेषां अथ एतेषां, यावद् प्रीति परस्पर,सहासन न सम्भाव्य, अन्नाद्य वसन तथा ? (२२०) । कलहे खलु सम्प्राप्ते, येन केनापि हेतुना, विभिद्यन्ते विभज्यन्ते भ्रातरो अपि सहोदरा । 'प्रोफ़ेसरस्य' चान्यस्य भवेद् मुसाहब कुल, महाशालस्य वा 'सार्थवाहस्य' 'नैगमस्य' वै , भिन्नप्रकृतिकैश्चापि विभिन्नव्यवसायकै अपत्यैर्यदि पूर्ण, तत् , किं तयोर्कुलयोर्मिथ न सम्भाव्योऽन्नसम्बन्धो, यौनसम्बन्ध एव वा ? पितुर् 'गोत्र' त्यजत्येव, पत्युर्गृह्णाति चैव हि,-कन्या पाणिग्रहे यद्वत्, 'वर्णं' चापि तथैव हि । कर्षकस्यापि कन्या वा, पुत्री वार्ताविकस्य वा, सुताऽथवा सैनिकस्य, राज्ञ चेत् परिणीयते, सद्य एव हि सा राज्ञी , राजजीविका यत जीविष्यति तु सा इदानीं , न शूद्रा [illegible] पितु पुन । राजाऽसने स्वय तिष्ठेद्, अधिकाराश्च वर्त्तयेत् , 'राजा' एव वाच्यतेऽपि स्त्री , न तु 'राज्ञी', इति व्याहृति , आचार्यस्य तथा पत्नी तु 'आचार्याणी' इति कथ्यते , आचार्यं च स्वय कृत्वा स्त्री 'आचार्या' इत्येव वर्ण्यते । 'वर्णं' तु 'जीविका' सम्या, तस्य वै पर्ययो भवेत् , योषिताया परिणये , त्यक्त्वा गोत्र पितु , यथा कुटुम्बं, वर्णमपि च, पाणिग्राहस्य सा विशेत् , ( २३० ), —एवं कृता चेन्मर्यादा, वर्णानां रक्षण भवेत् , न भज्येत व्यवस्था एषां, न स्याद्विड्वरा [illegible] सद्यता । 'वर्णं' तु 'आर्त्ति' भरेव, बहिष्कार क्रियेत चेत्, उपस्यते ऽ तरायास्तु नित्यमेव भवा नया , "काम स्वभावयाम " सन्, न आत्यादिक ईक्षते , पुतिर्नृत्यांऽथवा चापि गमिष्यति समाजता , न 'समाज' 'सम भज' स्यात्; नैव च अद्य अस्ति भारते । सर्वं न्यवहारेषु , खीकव्यसनसाम्यत , सर्वेषामेव संसर्गो दृश्यते भारतेऽपि च, ( पौटनिल्युपित किंतु कार्य यद्वन् , न तु ६८ ), जन्मवर्णाग्रहेणापि प्रज्ञानामिह सर्वश , भोजनोद्वाहयोरेव संसर्गो वर्ज्यते कुत ? 'प्रत्यक्ष, चानुमान च, शास्त्र च, विविधागम, त्रय सुविदित कार्य, धर्मशुद्धिमभीप्सता , आर्ष धर्मोपदेश च, वेदशास्त्राविरोधिना, यस्तर्केणानुसन्धत्ते, स धर्म वेद, नेतर " ( म० ) । न प्रत्यक्ष प्रमाण वा, न तथा चाऽनुमानिक,नाऽऽगमीय असंदिग्ध,जन्मवर्णाय लभ्यते । कर्मवर्णस्य सिध्यर्थं लभ्यते अपि त्रयं बहु । यद्यस्ति सदृश पुत्रो वर्णयोग्यतया पितु , नून स लभतां वर्ण ; को निवारयितु क्षम ? नास्ति चेत् सदृशो, ऽन्य हि प्राप्नोतु

स्वगुणोचित । (२४०) । पर्यालोच्य इह अन्यत्र समीचीन निदर्शनं—आदाने 'दत्त'पुत्रस्य, यदि प्राङ्नाभिवर्धनात्, गृह्येत सद्योजातस्तु, यस्मात् कस्मात् कुलाद् अपि, यत्किंचिज्जातिनाम्नो वा, यत्किंचिद्वर्णनामवतः, आदातुरेव वर्णोऽस्य शिशोरपि भविष्यति—इति वै 'धर्मदाग्राणा' अनुज्ञा,रीतिरेव च प्रथिता, अनुमता चापि शिष्टे । तत्रास्ति कारणं, एवदेव, यद् अर्भस्य शिक्षा, दीक्षा च, संस्कृति, जीविका च तथा, अदातृकुलस्यैवानुसारिणीसाविनी, अस्य ततो 'वर्णो'ऽप्या दातुर्भविता ननु । ( २४५ , आदित २३२७ )श्लोका ।

---

ॐ ८ अध्याय

वर्ण निर्णय कथ ?

(६) प्र० गुण कोऽस्य,रुचि काऽस्य, प्रवृत्ति परीदृशी तथा, किंवर्णयोग्यश्चैव इति निर्णय क करिष्यति?

उ० शिक्षाप्रवृत्तस्तु बालाना सर्वथा शिक्षणे रत , प्रकृतीना च सर्वथा निरीक्षक परीक्षक , अध्यात्मविद् च, ज्योतिर्विद्, लक्षणानां नृणा च विद, सामुद्रिक वेत्ता च, अप्यऽयुर्वेदविद् एव च, द्रष्टा च व्यवहाराणा विविधानुभवैर्युत , निश्चेतु एतत् क्षम स्यात् , नान्यथा धृतिमाप्नुयात् । अन्नप्राशनसंस्कारे ऽप्यस्ति विहिता परीक्षणा—"कृतप्राशन उत्सङ्गात् धात्री बाल समुत्सृजेत् , वार्थं तस्य परिज्ञान जीविकायां , अनन्तर, देवताग्रे ऽथ विन्यस्य शिल्पभाण्डानि सर्वश शास्त्राणि चैव, शस्त्राणि, तत पश्येत् तु लक्षण , प्रथम यद् स्पृशेद् बाल , ततो, भाड स्वय तदा, जीविका तस्य बालस्य तेनैव इति भविष्यति" ( पारस्कर गृह्य सूत्र, गदाधर भाष्य, का० १, क० १९ ) "अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वदा , शास्त्राणि चैव, शस्त्राणि तत पश्येत् तु लक्षण, प्रथम यत् स्पृशेद् बालो रिंगमाण स्वय तदा, जीविका तस्य बालस्य तेनैव तु भविष्यति ( मार्क० ) , ( १० ) , "तस्मिन् काले स्थापयेत् तत्पुरस्ताद् वस्त्र,शस्त्र लेखनी पुस्तक च, स्वर्ण, रौप्य, यच्च गृह्णाति बाल , तै आजीवं तस्य वृत्ति प्रदिष्टा" ( अन्य ) । अन्नप्राशनसंस्कारे परीक्षा क्रियते कुत ? अबोध-लोकक्रीडासु आस्था च कथं ईदृशी? शिर कपालसन्धी तु, यावद् अस्था पिधीयते न 'ब्रह्मरन्ध्र',तावत्तु 'क्षेत्रज्ञ ' सूक्ष्म देहत स्थूलदेह धारयति, रक्षति पुन च बालक ; अन्नाशनानन्तर तु क्रमशो-

अस्य विवर्धते 'भिदा'-बुद्धिर्, 'अहं'-भावः, स्वच्छन्दा कर्मकर्तृता ; विपरीतो ततश्चापि 'क्षेत्रज्ञो' ह्यधिकाधिकं ; काले गते प्रबुद्धिये, योगाभ्यासतपःश्रमैः, 'अहं-कारे' क्षयं याते, क्षेत्रज्ञस्य उदयः पुनः । सापेक्षं सर्वमेवैतन्, नैव ऐकान्तिकं, उच्यते । निष्कर्षस्तु अयमेवात्र प्रस्तुतविषयान्वितः—जातस्य वंशे कस्मिंश्चिद्, तत्पद्धतिपरम्परा, यथैव ज्योतिर्विद्भिः सुविज्ञैः जन्मपत्रिका, अन्नप्राशनसंस्कारे परीक्षा या कृताऽपि सा, प्रकृतेः 'सूचिका'; किंतु प्रकृत्यैवास्मि 'निर्णयः'। (२०)। कीदृशी कस्य बालस्य प्रवृत्तिः, कीदृशो गुणः, रुचिश्च कीदृशी तस्य, तथोचितं कर्म कीदृशं, जीविकार्थं ?—अथ एतेषां प्रश्नानां तु विनिर्णयः कर्तुं अध्यापकैरेव द्रष्टव्यः, सम्यग्, गुरोः कुले ; ते गृहास्य ततो वर्णं निश्चिन्वंतु स्वभावजं, नैसर्गिकप्रवृत्तेश्चाप्यनुकूलं, रुचेरपि, दिने दिने समीक्ष्यैव, शिक्षयित्वा यथोचितं । समावर्तनसंस्कारे स्वंतिमो वर्णनिर्णयः । द्वितीयं जन्म तत्रैव सिध्यति ब्रह्मचारिणः ; "तत्रास्य माता सावित्री, पिता त्वाचार्यः उच्यते ; आचार्यस्तु अस्य" यं वर्णं "विधिवद्, वेदपारगः, उत्पादयति सावित्र्या" ( म० ), सोऽस्य सत्योऽस्ति; नापरः । 'आचार्यः' चेत् 'सूक्ष्म'-दर्शी 'ऋषिर्' 'दिव्यचक्षुर्वांस्' तथा, शिष्यस्य 'सूक्ष्मदेहस्य' 'वर्णं' निर्णयन-क्षमः, तदा भवेत् क्षणेनैव विनाऽऽयासेन निर्णयः ; 'सात्त्विक'स्य तु भाः चान्द्री, श्वेता, स्वर्णेन रंजिता ; 'राजस'स्य पुनः रक्ता, तथा चामीकरार्दिता ; नीला दीप्तिः 'तामस'स्य, छादिता हेमरोचिषा ; अव्यक्तस्य तथा अव्यक्तो वर्णो नीहारवद् भवेद् । (२०) । "अजा सा एका लोहित-कृष्ण-शुक्ला बह्वीः प्रजाः सृजति रूपं सर्वतात्" (सां०का०)। "तमो वा इदं एकं हि ; तत् परेण ईरितं पुनः विषमत्वं प्रयाति, एतद् रूपं तु रजसो भवेद् ; रजस् तद् ईरितं भूयो विषमत्वं प्रयाति हि, तस्मात् सम्प्रास्रवत् सत्त्वं ; विष्णुरंशस्तु सात्त्विकः ; ब्रह्माऽथ राजसोंऽशोऽसौ ; तामसो रुद्र उच्यते, स वा हि एकधा त्रिधा भूतोऽष्टधा एकादशधा तथा, द्वादश-असंख्य-धा चाऽऽत्मा बहिरन्तस्तथैव च" ( मैत्रायणी उ० ) । शिक्षाव्यूहेन निर्णीते वर्णे, वृत्तिं अवाप्नुयात् सर्वः, समाजे स्थानं च स्वप्रकृत्युचितं सदा ; सर्वः स्वं स्वं धर्मकर्म प्रीत्या कुर्यात् समाहितः ; सम्यग् विभजनाच्च च नृणां, चतुर्षु अपि च, वर्णानां, कृत्यानां, सोपानानां च, वर्णेष्वप्याश्रमेषु च, सुव्यवस्था समाजस्य, सर्वेषां च सुखं, भवेत् । नानेकवृत्तिमान् कश्चिद्, वृत्तिहीनो न कश्चन ; नात्यन्तं धनवान् वापि, नात्यन्तं वापि निर्धनः ; जन्मनैवोच्चनीचादि दर्प-दैन्यादिकं न हि ; नाहंकार-विर-

स्कारो, न संघर्षो, न मत्सरः ; नैवेर्ष्या-कलहैर्नित्यं चलनं प्रतिवेशिनां, न युद्धानि, न दुर्भिक्षं, नापि रोगभयं, भवेत् । (४०) । यतूनां दीक्षितत्वाच्च, द्विजत्वाद्, धर्मप्रोपनात्, नियंत्रणाच्च च कामानां, इन्द्रियाणां च निग्रहात्, आश्रयात् 'मध्य'-सूत्रेश्च, सर्वथापि 'अति'-वर्जनात्, नात्यंतं निष्प्रजः कोऽपि, न चैधाति प्रजस्तथा । भूरिशो जनसम्बाधैर्, आहारार्थं विवादिभिः, नऽप्राप्नुवद्भिर्अलं भोज्यं, स्पर्धमानैः परस्परं, आक्रान्तायां यतो मह्यां, मात्स्यो न्यायः प्रवर्तते, तस्मात् सन्तानबाहुल्यं न इष्यते दूरदर्शिभिः । मितासु अपि प्रजासु, इष्टं द्विज भूयस्त्वं एव हि ; "यद्राष्ट्रं शूद्रभूयिष्ठं, नास्तिकआक्रान्तम्, अद्विजं, विनश्यति आशु तत्कृत्स्नं, दुर्भिक्ष-व्याधि-पीडितं" ( म० ) ; 'अद्विजा.' खलु अनात्मज्ञाः, 'शूद्राः', ये ह्रस्व-दर्शिनः, न दीर्घदर्शिनो, विज्ञाः, कार्यकारणवेदिन', अनुबन्धं विजानन्तः कर्मणां दूरगामिनं ; येषां नास्ति आयतेर्ज्ञानं, नास्ति आत्मा देहतोऽपरः, स एव 'नास्तिकाः' बालाः मूढाः नश्वरलोभिनः ; एतादृशानां बाहुल्यं यस्मिन् राष्ट्रे भवेत्, कथं न अमर्यादं भवेत्तत्र सर्वमेव अधरोत्तरं ? राष्ट्रे तु 'द्विज'-भूयिष्ठे मर्यादा सम्प्रवर्तते ; युद्धं 'द्विजानां' एव, तत् तु स्वान्त-करणे एव हि, प्रत्येकस्य मनुष्यस्य स्वस्वदुष्टा-शयैः सह ; (५०) आत्मन्येव द्विधा भक्ते उत्तम-अधम-भेदतः, अशुभेनैव मनसा युध्यतेऽत्र शुभं मनः ; निर्जित्यापि च तद्रूपः 'स्व'-राज्यं स्थापयत्यसौ, उत्तमः 'स्व.' सदा यस्मिन् अधमं 'स्वं' प्रशास्ति हि । "उद्धरेद् आत्मना-ऽत्मानं, नआत्मानं अवसादयेत् ; आत्मैव हि आत्मनो बंधुर्आत्मैव रिपु-रात्मनः" ( गी० ) ; "मनस्तु द्विविधं प्रोक्तं, शुद्धं, चाशुद्धमेव च ; अशुद्धं कामसंकल्पं, शुद्धं कामविवर्जितं" (उ०) ; 'जितात्मनां' प्रशान्तानां निष्पक्षाणां मनीषिणां राज्यमेव 'स्व-राज्यं' स्यात् ; नहि एवानात्मवेदिनां । सुरेहेदृमयत्यास्तु सम्राजि यदि दुर्जनाः उद्भवन्त्येव, तदा क्षिप्रं निग्रहीष्यंति 'रक्षकाः', उच्छेत्स्यन्ति च दुर्गुणान्, उपायैः उचितैरपि । स्वे स्वे कर्मणि अभिरताः एवं सर्वेऽपि मानवाः परस्परं सुमनसो भवेयुः प्रशमान्विता', सहोदराणामिव वा,ऽपि एकदेहाङ्गवच्च वा, ग्रासदास्, त्राणदाश्चापि, पाणदाश्च, सहायदाः । (६०) ।

गुणोत्कर्षाय प्रोत्साहनं कथं ?

(७) प्र० ननं उक्तं हि गीतायां—"कार्यं कर्म समाचर, कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन" (गी०) ; एतद्वे किन्तु विरलाः कृत्यबुद्ध्या एव केवलं, गुणोत्क-

र्पाय यदस्तु प्रोत्साहनमपेक्षते, उद्दीपनं भवेत् किन्तु गुणोत्कर्षप्रदर्शने ? शंकाऽन्या चाऽपि—कृष्णेन द्विधा उक्तं, मनुना तथा ; "कामात्मता न प्रशस्ता, न चैवेहास्ति अकामता", "निष्कामं कर्म सेव्यं" चेति, उभयं मनुनोच्यते (म) । "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ; × नैष्कर्म्यसिद्धिं परमां सन्यासेनाऽधिगच्छति" ( गी० )—कृष्णोऽपि द्विविधं चैवमाह व्यामोहकारकं । "कर्मणश्चापि बोद्धव्यं, बोद्धव्यं च विकर्मणः अकर्मणश्च, बोद्धव्यं, गहना कर्मणो गतिः" ( गी० ) ।

उ० पारिभाषिकसंज्ञानां ज्ञानात् अत्र समन्वयः, विरोधपरिहारश्च, सर्व-शंकानिरासकः ; कृष्णेन, मनुना चापि, सूचितं हि स्वयं यथा ; "सुखाभ्यु-दयिकं चैव, नैःश्रेयसिकमेव च, प्रवृत्तं च निवृत्तं च, द्विविधं कर्म वैदिकं ; इह चामुत्र वा 'काम्यं' 'प्रवृत्तं' कर्म कीर्त्यते ; 'निष्कामं ज्ञानपूर्वं तु 'निवृत्तं' उपदि-श्यते ; (७०) ; प्रवृत्तं कर्म संसेव्य देवानां एति साम्यतां, निवृत्तं सेवमानस्तु भूतानि अत्येति पंच वै"(म०)। "न कर्मणां अनारम्भात् 'नैष्कर्म्यं' पुरुषोऽश्नुते, × असक्तबुद्धिः सर्वत्र, जितात्मा, विगतस्पृहः, नैष्कर्म्यसिद्धिं परमां सन्यासेनाधि-गच्छति ; 'काम्यानां' कर्मणां न्यासं 'सन्यासं' कवयो विदुः", ( न, यौवनेऽपि, बाल्येऽपि, कापायाऽदिग्रहणेन ; विना तपो, विना विद्यां, सदाचारं विनाऽपि [redacted] ; स्वार्थायैव, गृहस्थानां भाररूप बहु वर्धते मिथ्या-सन्यासिनां एषां भरणाय पूर्वेव वै ) ; "सर्वकर्मफलत्यागं प्राहुः त्यागं विचक्षणाः" (गी०) ; अवमत्याभिसंधि स्यात्, अकृतं इत्यमेव च, यथा हि 'अविद्या', विद्यायाः न-अभावः किल केवलं, किंतु मायमयी भ्रान्तिः, मिथ्या-ज्ञानं, असद्-ग्रहः, "अतस्मिंस्तापि तद्बुद्धिः", रज्जौ सर्पभ्रमो यथा ; यथा अ-मित्रं तु मित्रत्वाभावः एव न केवलं, किंतु शत्रुः ; यथा चापि दुःखं खलु अ-सुखं पुनः ; यथा अ-सितं तु कृष्णं स्यात्, सिता-भावो न केवलं ; तथा 'नैष्काम्य'-'नैष्कर्म्य' न शून्यं काम-कर्मणोः अभावमात्रं, किंतु एते विशिष्टे काम कर्मणी ; बन्ध-निर्मोचकं 'कर्म' नैष्कर्म्यं' इति भण्यते ; बन्धमभिमुक्तश्च 'कामो' 'नैष्काम्यं' उच्यते ; 'प्रवृत्तं' बन्धकृत् 'काम्यं', निष्कामं' तु 'निवर्तकं' ; 'आरम्भकं' तु 'कर्म' स्यात्, निष्कर्म' तु 'समापकं'; 'बन्धकं' खलु 'कर्म' अस्ति, 'निष्कर्म' स्यात् तु मोचकं ; अर्पणं तु 'निष्कर्म', कर्मप्रदा-नं तु 'कर्म' वै ; एवं कर्मफल-आसक्तिः निवृत्तेन, उपदिश्यते, निवृत्त्युन्मुखलो-कानां ; न प्रवृत्तजनाय तु । प्रवृत्ति-बुद्ध्या स्वं धर्मकर्मादि आचरतां, पुनः, युक्तानि

अपेक्षितान्येव सदा प्रोत्साहकानि हि फलरूपाणि—कीर्तिर्वा, सम्पत्तिर्वा, इंदिराऽन्यथा। नून गुणविशिष्टानां विशिष्ट पारितोषिक। समाजकल्याणकरा, नान्ये, तत्र 'गुणा' स्मृता। "वित्त, बंधु, वय, कर्म, विद्या, भवति पञ्चमी, एतानि मानस्थानानि, गरीयो यद्यद् उत्तर, पञ्चाना, त्रिषु वर्णेषु, भूयांसि, गुणवन्ति च, यत्र स्यु सोऽत्र मानार्हः, शूद्रश्च दशमीं गत" (म०)। (विद्या विप्रे, धन वैश्ये, क्षत्रे शक्तिश्च कर्मंग, विज्ञपत्य पेक्षितास्तु, वयो यत्र चतुर्ष्वपि)। (९०)। "न हायनै, न पलितै, न वित्तेन न बन्धुभिः, ऋषयः चक्रिरे धर्मं, योऽनूचान स नो महान्। न तेन वृद्धो भवति येनास्य पलित शिर, यो वै युवा अपि अधीयान, त देवा स्थविर विदु। विप्राणा ज्ञानतो ज्यैष्ठ्य, क्षत्रियाणां तु वीर्यत, वैश्याना धान्यधनत, शूद्राणा वयसैव च" (म०)। ज्ञानदोऽपि च सम्मानैः, ईप्सिता अधिका तथा प्राणद, प्राणदश्चैव अधिकं जित्समर्हति, विनोद अधिक चापि फाक्षस्येव सहायद। हृदयआप्यायकान् एतान् ज्ञात्वा [illegible] उत्साह वर्धनान्, प्रत्येकस्य स्वधर्मस्यऽवश्यकान् साधनोच्चयान्, "स्वे स्वे कर्मण्यभिरत" सिद्धिं सर्वोऽपि एष्यते। "स हिंसता साधु न शास्ति योऽधिप, हितान् न य सम्शृणुते स किं प्रभु", समानसम्प्राहकमेव नैव यत, विग्राहक प्रत्युत, 'शास्त्र' मस्ति 'किं'। अभ्यस्यते इदानीं तु यानि शास्त्राणि सस्कृते, न उपकारीणि तानि इह व्यवहारे, मनाग् अपि, (आयुर्वेद ऋते, किंचिन्मात्र [illegible] ज्योतिष तथा), प्रत्युताऽपि विहन्तॄणि व्यवहारस्य वै भृशं, शास्त्रस्य व्यवहारस्य पार्थक्यात् पतितौ उभौ, (१००), उद्धाराय उभयोस्तस्माद् यत्न कार्या सुधर्मिभिः, शब्दाना उत्तमार्थाना प्राचीनाना निरन्तरं, अध्यात्मदृष्ट्या तेषां च व्यवहारे प्र योजने। स्व भावगुणनिर्दिष्टकर्मणा यदि वर्णता भवेत्, तदा मनुष्याणा जीवनस्यानुबन्धिन प्रश्नाः सर्वेऽपि अनायासं उत्तरेयुः सुखेन ते, प्रश्नैर्यैरेव कालेऽस्मिन् नृलोको व्याकुलीकृत—कथं शिक्षा, कथ रक्षा, कथ चोदरपूरण, कथ वस्त्र, कथं वास, कथ मन्मथतर्पण, चतसृणां एषणाना कथं चोचिततोषण, चतुर्णां पुरुषार्थाना सम्यक् सम्पादन कथ, पति पत्नी पुत्र पुत्री पितृ-मात्रादय, तथा भ्रातृ स्वसृ मित्र शत्रु प्रतिस्पर्धि सहायका, भावा ये ईदृशा जीवसम्बन्धिनस्तवति हि, सुखदु खमया, येषां द्वन्द्वाना अनुभूतये जीवो देह उपाधत्ते, तेषां अनुभव कथ अधिकेन सुखेन स्यात्, दु खेनाल्पतमेन [illegible], कथ विनोद, आमोद, क्रीडा, आनन्दन तथा, परस्परानभिद्रोहो,

द्रोहोऽल्पो अथवा पुनः ; ( ११० )। राज्ञां सहगामित्वं, न परस्परसंगरः, रणकंड्वाः तथा शांतिः सर्वेषां च, कथं भवेत् ?—इंदृशानाम् अशेषाणां प्रभावाम्पूर्णमुचार्ये, 'कर्मणा वर्णः' इंत्येवम्मार्गेणऽऽपाद्यते ध्रुवं। विशीर्णजीर्णसंकीर्णां आर्यां भारतसंस्कृतिं उद्धर्त्तुं, प्रणवीकर्त्तुं, नान्यां जानीमहे वयं रीतिं, नीतिं, विहायैतां विशुद्धां 'कर्मवर्णतां'। कर्मणैव हि वर्णः स्यात् ; कर्माणि गुणतस्तथा ; गुणः स्वभावजश्चापि,शिक्षया विशदीकृतः। जन्मापि चेद् भवेद् भव्यं ब्राह्मकर्मरते कुले, भूयः स्यात् कर्मणः शुद्धिः, सौन्दर्यस्येव मंडनैः। उत्तमं जन्मकर्मभ्यां, कर्मणैव तु मध्यमं, नास्त्येव केवलं जात्या, वर्णत्वं, इति स्मृतं।

यदि एवं उत्तमा कर्मवर्णव्यवस्था, तर्हि कथं ध्वस्ता ?

(८) प्र० प्रश्नोऽयं संभवत्यत्र—सुव्यवस्था यदि ईदृशी कर्मवर्णात्मिका पूर्वं, कस्माद् भ्रष्टा ? कथं न सा रक्षितुं स्वं समर्थाऽभूद्, एवं गुणिमती सती ?

उ० न हि औषधं भवेन्नु स्यात् शस्त्रं, अत्युत्तमोत्तमं, विना उपचारिहस्तेन, रोगिणस्तु सुखं स्वयं। जनतायाः व्यवस्था एवं,अपि सुष्ठुतमा सती,उद्गुप्तत्वं प्रयोक्तृत्वं महाक्षत्रस्य कांक्षति। (१२०)।ज्ञानाङ्गे च,क्रियाङ्गे च,मस्तके,भुजयोरपि,कल्याणसाधनं सर्वं शरीरस्याखिलं सदा; भवनं रक्षणं चतस्भ्यां उदर-ऊर्वोर्विधीयते। उत्तमाङ्गे हि विभ्रष्टे, नष्टं सर्वं हि संरक्षणं ; मस्तके विकृते, बाहू विकुर्वाते, तथोदरं न स्वकार्यं करोति, एवं पादौ उन्मार्गं व्रजतः। "प्रज्ञापराधाद् हि अहितान् अर्थान् पंच निषेवते" (चरक०), ततो बहुविधाः रोगाः पीडयंत्येनं अंजसा। 'मूला' तु भवरोगस्य, 'तृष्णा' क्षुद्ररुजां तथा, 'अ-विद्यैव' हि रोगाणां सर्वेषां मूलं आदिमं, सा सा विद्या च रोगाणां सर्वेषां एव भेषजं। प्रज्ञा दोषेण आयन्ते आधयो व्याधयस्तथा। प्रज्ञा-प्रसादेन एवापि नश्यंतेऽपि च तेऽचिरात्। द्रव्यैश्चिकित्स्या व्याधीनां, आधीनां आत्मविद्यया ; द्रव्याणां भेषजत्वं च विद्यया एवावगम्यते। "नामंत्रं अक्षरं किंचित्, न द्रव्यं अनौषधं, नायोग्यः पुरुषः कश्चित्, प्रयोक्तैव तु दुर्लभः" ( सत्य सु० )। ब्राह्मणम्मन्यमानेषु तपो-विद्या-विलोपनात्, धर्मेस्त्वीजसो ह्रासात्, भूमिपालां अयत्नात्, निर्मर्यादतया राज्ञां, स्वाच्छंद्यात्, पापकृत्तया, (१२०), "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" ( गी० ), इति न्यायेन सर्वत्र पापबुद्धिप्रविसर्पणात्, समग्रं भारतं वर्षं वर्तमानां दशां अगमत्। "ब्राह्मणं तु स्वकर्मस्थं दृष्ट्वा क्षिप्यति चेतरे, चान्यथा, क्षत्रियाद्यास्तु, विप्रस्तत्राऽपचरेत्"

(शु०नी०), "क्षत्रस्याति प्रवृद्धस्य, ब्राह्मणान् प्रति सर्वशः,ब्रह्मैव सन्नियन्तृ स्यात्, क्षत्रं हि ब्रह्मसम्भवं" (म०)। ज्ञानेन एव उत्पादितं शस्त्रं, ज्ञानेन एव नियम्यते, निर्मातुं शक्यते यद्वत्,तद्वत् भङ्क्तुं च शक्यते 'ब्रह्मा'आदेशात्,प्रजाभिस्तु 'मनुः'राजा धृतः कृतः, प्रत्येकजातौ, वृद्धानां श्रद्धेयानां कदम्बकं,'ब्रह्मा' इति,बहुमान्यत्वाद्, 'बृहत्वाच्' च एव उच्यते,तत्प्रदेशाद् यथा योग्यः राजत्वे तु नियोज्यते तथा एवा-स्यआज्ञया अयोग्यः राजत्वाद् हि वियोज्यते।यद्वत् ढिल्ला पूर्वं भूपा उत्पथगामिनः हताश्च धर्महन्तारः प्रजापीडनकारिणः, ज्वलनैरिव तेजोभिः तपसां, परमर्षिभिः। "वेनो विनष्टोऽविनयात्, नहुषश्च नराधिपः, सुदाः पैजवनश्चापि, सुमुखो, निमि-रेव च,×(दण्डकः, कार्तवीर्यश्च, समग्रं यादवं कुलं,)। (१४०)। स्ववीर्याद् राजवीर्याच्च स्ववीर्यं बलवत्तरं, तस्मात्स्वेनैव वीर्येण निगृह्णीयाद् अरीन् द्विजः। ×यद् दुस्तरं, यद् दुरापं, यद् दुर्गं, यच्च दुष्करं, सर्वं तत् तपसा साध्यं, तपो हि दुरतिक्रमः; ×तपो विद्या च विप्रस्य निःश्रेयसकरं परं, तपसा किल्बिषं हन्ति, विद्ययाऽमृतमश्नुते" (म०)। "न बलं, क्षत्रियस्याहुः, ब्राह्मणो बलवत्तरः ×धिग्बलं क्षत्रियबलं, ब्रह्मतेजोबलं बलं, एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे" (वा० रामा०, बा० का०, अ० ५५ ५६ ), एवं तु निर्विवेद असौ, वसिष्ठेन पराजितः, यः विश्वमपि सङ्क्रुद्धः मित्रं कर्तुं न अशकत्, उग्रतेजाः, महाराजः, प्रवीरः, क्षत्रियर्षभः सर्वेषां अस्त्रशस्त्राणां निधानं परमं च यः, विश्वामित्रो हि, सः पश्चात्, तपस्तप्त्वा महत्तमं, विश्वस्य मित्रं, महर्षिः, गायत्रीमन्त्र-कृत् तथा, बभूव या महादेवी सावित्री वेदमातरः, सर्वशक्तिसमाहर्त्री,तपःसार-स्वरूपिणी, सर्वज्ञानप्रसविनी, 'द्विजाः' सर्वे उपासते। प्राङ्विधास्यद् एवं एतान् भूपतींस्तु महर्षयः, तपःकृशाः, वृद्धदासः, पर्यैक्षन्त पुनः पुनः—(१५०)—'अस्ति ते विषये कश्चिच् चोरो, मिथ्याप्रवञ्चकः, व्यभिचारी, दुराचारी, स्वधर्मवि-मुखोऽथवा, अशिक्षितो, दरिद्रो वा, गर्जालुः, परपीडकः, विद्या रूप धन ऐश्वर्य बल अभिजन दर्पितः ?' 'नास्तीदृशोऽस्मद्विषये'—नृपा उदत्तरंस्तथा। नेदृशा ब्राह्मणाः सन्ति, क्षत्रिया सन्ति नेदृशाः, चारित्र्यनाशादुभयो भारतः निरयं गताः। "अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्, रक्षार्थं अस्य सर्वस्य राजानं असृजत् प्रभुः" (म०), राजोत्पत्तिसमाख्याने व्यस्तमेतत्तु भारते। "धर्माय राजा भवति, न कामकरणाय तु यथा हि गर्भिणी हित्वा स्वं प्रियं मनसो-

स्तुतं, गर्भस्य हितं आचरेत्, तथा राज्ञाऽप्यसंशयं वर्तितव्यं, कुरुश्रेष्ठ!, सदा धर्मानुवर्तिना, स्वं प्रियं तु परित्यज्य, यद्यल्लोकहितं भवेत्" (म० भा०)। अभिषेके नृपाणां च, प्रतिज्ञा तैः अकार्यत—"प्रतिज्ञां चाधिरोहस्व, मनसा कर्मणा गिरा, पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत्, यश्चात्र धर्म इत्युक्तो, दण्डनीति-व्यपाश्रयः, तं अशंकः करिष्यामि, स्ववशो न कदाचन" (म० भा०); (१६०); 'भौमं ब्रह्म' इति शब्दाभ्यां अत्र हि अर्थोऽयम् दृश्यते—ब्रह्म-विद्या च, सर्वा च भूगता ब्रह्मणः प्रजा। "ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो नियोजितः, स कथं तद् गृहे द्वास्थः सभार्यं भोक्तुमर्हति? अहो अधर्मः पालानां पीडा वलिभुजां इव, स्वामिनि भय यद् दासानां, द्वारपानां शुनामिव" (भा०)। भ्रष्टेषु ब्राह्मणेष्वेवं, विप्रवशाः क्षत्रियाः अपि, सर्वा वर्णव्यवस्था च सर्वथा व्यर्यस्ता गता। "दमनाद् दंडनाद् दंडः, नयनान्नीतिरुच्यते" (म०भा०), दंडस्य सत्प्रणेतॄणां, वक्तॄणां सद्नयस्य च, अंशाद्, अभावाच्चैवापि, दुर्नयो भय जायते। राज्ञां इतिहासेषु बहु एतस्य निदर्शनं—ब्रह्म-क्षत्र-विलोभात् यत् जायते घोरविप्लवः। विलास-भोगसक्तानां, विप्राणां अतिलोभिनां, इच्छतां धनं ऐश्वर्यं, विप्रलम्भनदम्भनैः, शाठ्यशालीं तथा राज्ञां प्रजा-तक्षण-भक्षणैः, धर्मविक्रयिणां पापैः, भृशं उद्वेजिताः जनाः, संहत्य, मद्याः, क्रुद्धाः, उभौ एतौ व्यवाशयन्। ईसाऽष्टादशाब्दान्ते फ्रांस-देशे तथाऽभवत्; तथा ईसा-विंशाब्दादौ रूसे रूमेऽपि चाभवत्। (१७०)। विप्राः कोष-पुर-ग्राम-नगरीणां चापि अधारयन्, 'राजपट्ट'इति सहितं 'जगद्गुरु'-पदं तथा, 'पोप'अभिधानाश्च ऐच्छन्त राजवत् शासितुं धराम्. प्रायशोऽत्र ततस् तेषां कलहाः राजभिः सह, प्रजाविनाशिनश्चापि, राष्ट्रविप्लवकारिणः, यूरोपदेशस्य इति-हासे, युगे 'मध्यम' नामके, ('मिड्ल एजेज़'); जमदग्नेः, तत्सुतस्य परशुरामस्य चापि वै, कार्तवीर्यार्जुनेनाथ यथाऽभूद् बहुधा विग्रहः; यथा एव 'भार्गवं' युद्धं विश्वामित्रवसिष्ठयोः। कम्पोर् महर्षि ईशिरवा राज्ञोर् द्रोमले व्यवर्धत। कदाचिद् अजयन् विप्राः, कदाचित् क्षत्रियाः, तथा, प्रजानां पुनः साहाय्यात्, अल्पदोषतराः हि ये अभूवंस् तस्मिंस् तु काले वै, लोकप्रियतराः ततः। नाटके मृच्छकटिके वर्णितो, राज्यविप्लवः कृतः प्रजाभिः कुपितैः ईदृशैरेव कारणैः। पुराण-इतिहास-काव्य नीति-स्मृति ग्रन्थेषु चैव हि, विप्लवानां ईदृशानां दृष्टान्ताः भूरि उदाहृताः। न एकस्मिन् एव वर्णेऽत्र व्याख्या सर्वबलप्रयुक्ता; चत्वारो ये बलाः सन्ति, ज्ञान

शास्त्र धन श्रमा , सम्यग् विभाजिता एव वर्णेषु तु चतुर्षु अपि, नूनं भवति लोकस्य सदा कल्याणकारका । (१८०)। नहि 'ब्राह्मणराज्य' वा केवल च अनियन्त्रित, न च 'क्षत्रियराज्य' वा, 'वैश्यराज्य' न वा तथा, न चैव 'शूद्रराज्य' वा, प्रजाना स्यात् सुखावह, प्रत्युतऽकुल्ताकारि, राजधर्मविरोधि च, स्वच्छन्द हि यत सन् स्यात् , निर्मर्याद, असीमित कर्तव्यं सर्ववर्णाना, अधिकारैश्च, सर्वत्र -मापित चापि अवच्छिन्न, सम्यग्दर्शिविभाजिते । कस्यापि एकस्य वर्णस्य प्रभुत्व, शस्त्रा विना समयाना, मिथो वर्णै स्वीकृताना तथाऽन्यैरै , ऐश्वर्यमदमत्त च भयस्य जनयिष्यति, तादृशस्य च राज्य घोरानर्थकर सदा । तस्मात् चतुर्णा वर्णाना 'मानव' राज्य एव हि, अनुमताना अन्योऽन्य सर्वेषा सुखकारक । "सर्वे क्षयान्ता निचया , पतनान्ता समुच्छ्रया , सयोगा विप्रयोगान्ता , मरणान्त च जीवित" (वा०रा०), "जातस्य हि ध्रुवो मृत्युर्,ध्रुवं जन्म मृतस्य च" ( गी० ), सृतिस्तु मृत्युजन्मान्ता, सयोगान्त वियोगान्त, नरोच्छ्रयान्ताः पाताश्च, सचयान्ता क्षयास्तथा । प्रकृतेर्विकृतिर्नित्य, विकृते प्रकृतिस्तथा, सर्वेष्वपि विभागेषु ससारस्य हि दृश्यते । (१९०)। सामान्य तु विशेषेषु, तस्मिंस्त् तेऽपि सर्व च हि, निलीयते, विलीयते, उत्पद्यते च नित्यदा, नित्य परिणमन्तो वै विक्रियन्ते ह्यभीक्ष्णशः , जातिर्व्यक्तिषु बह्वीषु,जातौ च व्यक्तयस्तथा, अनेकाश्च तथा एकस्मिन्, एकोऽनेकेषु वै तथा, साम्राज्ये यान्ति राज्यानि, तथ राज्येषु भिद्यते, लघ्वोऽपि महति एव, महान् लघुषु चैव हि, जीवात्मसु च सर्वात्मा, जीवाश्च परमात्मनि, सतत हि अनवरत, द्रवति च द्रवति च, सान्द्रीभवति एकतस्तु, तरलाश्चान्यत स्तथा, सलिल बाष्पमेघेषु, वारिवाहा जले पुन , घने हिमे जल, तथ हिम तु तरले जले, सृष्टिश्चापि, लयश्चापि, नित्यमेव प्रवर्तते, द्वन्द्वन्यायफलीभूत जगतो रूपमेव तत् , स्वजनेषु अखिलेष्वेव प्रकृतेर्नियमो हि स , तस्माद् विक्रियते शुद्धा चातुर्वर्ण्यव्यवस्थिति , कालात् पुन सस्क्रियते तथा सा तत्त्वदर्शिभि ।

जातिब्राह्मणा एव कस्मात् न नमस्य ?

( ९ ) प्र० सगर्व पृच्छ्यते कैश्चित् जातिब्राह्मणमानिभि —"उच्चै स्थिति जगति सिध्यति धर्मतश्चेत्, तस्य प्रमा च वचनं कृतकेतरैश्चेत् , तेषा प्रकाशन दशा च महीसुरैश्चेत् , तानन्तरेण निपतेन् क नु मत्पणाम ?" ( २०० )।

उ० अस्योत्तरं सादरेय,किंतु भवादृकारक—धर्मस्थितिर्जगति सिध्यति दृढत-श्चेत्,तस्य प्रणीतिरपि बाहुकरैर्दृढैश्चेत्,तेषां भवनवदृत्ता च महीश्वरंश्चेत्,तानन्तरेण निपतेत् क नु मत्प्रणाम ? धर्मप्रवत्नुरस्य दृढधरस्य चापि प्राणस्थितिर्जगति सिध्यति चान्नतश्चेत्,अन्नानि चापि न महीकृषकैर्विना चेत्,तानन्तरेण निपतेत् क नु मत्प्र णाम ? महा सुराश्च पतयो, ऽध्याश्च कर्षकाश्च, निष्पादर श्रमिव यतःहिता लुंठेयु· मह्या , वहति, गमयति, विचारयति, [illegible]सारयति अयरज्ञा , सकलान् परान् थे , सौजन्यत रजम् प्रजरान्,अपरान् परांश्च स्वीकुर्वते , सुरस्थितममिण सदैव, भार स्वय च परक च समुद्वहति , तानन्तरेण निपतेत् क नु मत्प्रणाम ? न पुस्तक, न च द्रव, न काञ्चन, न शारीर श्रम एवापि केवल,किं तु मूलंपरं सरलता हि सम, सर्वे गुणा एनैवा पृथग्भजयति । "ब्रह्मणा विहिता वर्णा , लोकतन्त्र अभीप्सता, यदि इह एकवर्णं स्यात् जगत् , सर्वे विनश्यति, यदि ते ब्राह्मणा न स्यु ज्ञान योगवहा सदा, उभयोर्लोकयोर, देवि !,स्थितिर्न स्यात् समास (अ?) त , (समा-ऽज्ञता,मनुष्याणा, विना ज्ञान न सिध्यति), यदि नि क्षत्रियो लोक , जगत् स्याद् अधरोत्तर, रक्षणात् क्षत्रियैरेव जगद् भवति शाश्वत, तथैव,देवि !, वैश्याश्च लोक यात्राहिता स्मृता , अन्ये तान् उपजीवति, प्रत्यक्षफलदा हि ते, यदि न स्युस्तु ते वैश्या , न भवेयुस्तथाऽपरे (२१०), तथैव शूद्रा विहिता सर्वधर्मप्रसाधका , शूद्रा हि यदि ते न स्यु ,कर्मकर्ता न विद्यते , त्रय पूर्वे शूद्रमूला , सर्वे कर्मकरा स्मृता (म०भा०अनु०अ०२०८) । (२०२)। (२०२ श्लो०, आदित २५२९) ।



## ६ अध्याय

विप्र नृप प्रशंसा, स्त्रीनिन्दा च, मनुस्मृता कस्मान् न मान्या ?

(१०) म० (क) "सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मण प्रभु , × भूतेष्वस्तु नरा श्रेष्ठा , नरेषु ब्राह्मणा स्मृता , × सर्वं स्व ब्राह्मणस्येद यत् किंचिज् जगती गत , × (ख) राजा ऽग्निश्चापि, वायुश्च, सोऽर्क , सोम , स धर्मराट् , स कुबेर , स वरुण , स महेन्द्र प्रभावत , × महती देवता ह्येषा नररूपेण तिष्ठति, × (ग) धौश्चल्याच् , चलचित्ताच् च, नैस्नेहाच् च स्वभावत , रक्षिता यत्नतोऽपीह भर्तृषु एता विकुर्वते , × शय्यासन, अलंकार, काम, क्रोध, अनार्जव, द्रोहभाव,कुचर्या

च, स्वीम्यो मनुरभ्रकल्पयत्" × (म०); यद्यपि ईदृंशि भूयांसि दृश्यंते ऽत्र मनुस्मृतौ, ब्राह्मणानां प्रशंसा दृग्, राज्ञां च महती तथा, नारीणां घोरनिन्दा च,यद् स्वयं मनुना कृता, उपेक्षणीयं एव एतत् सर्वं, मिथ्यावद् एव, किं ?

उ० नैवं, किंतु मनोरर्थः संदपाठैर्विलंब्यते; पूर्वापरेण सम्यूर्ण पाठे, सोऽर्थोऽवधार्यते। सर्वत्र हेतुपूर्वं हि श्लाघा,गर्हा ऽथवा,कृता मनुना; न विना हेतुं,'जाति'-मात्रेण केवलं,प्रत्युताऽनेन निन्दैव 'जाति'-मात्रस्य भाविता; स्वधर्मकर्मानुष्ठातुः एव तेन कृता स्तुतिः; (१०); अननुष्ठातुरेवापि गर्हणं च कृत भूयो, कर्मणः श्रेस्वं एव एवं पुनः ख्यातं; न जन्मनः। (क) "उत्तमांगोद्भवात्, ज्यैष्ठ्याद् ब्रह्मणश्चैव, धारणात्; × स हि धर्मार्थमुत्पन्नो धर्मकोशस्य गुप्तये × आनृशंस्याद् ब्राह्मणस्य भुंजते हि इतरे जनाः ■ यो ज्येष्ठो ज्येष्ठवृत्तिः स्यात्, मातेव स पितेव सः"; × (म०) यत्र 'उत्तमांगं' न ज्ञानं,तत्र ब्राह्मण्यमस्ति किं ? न ज्यैष्ठ्यं,नैव वा 'ब्रह्म', यस्मिन्, स ब्राह्मणः कथं ? धर्मगुप्ति-आनृशंस्याभ्यां विना स्यात् किं नु विप्रता ? "यथा काष्ठमयो हस्ती, यथा चर्ममयो मृगः, तथा विप्रोऽनधीयानः, त्रयस्ते नाम बिभ्रति" × (म०), सहार्थं जातु नाम अपि न एष 'ब्राह्मणं' अर्हति। "बिडाल-बक-वृत्तीनां, जातिमात्रोपजीविनां", ब्राह्मण-ब्रुव-जीवानां,बहुशो गर्हणं कृतं मनुना यत् स्वयं, तत्तु पूर्वमेवास्त्युदाहृतं। (ख) जुगुप्सा दुराज्ञानां उक्ता एवं, दंडयता तथा। "रक्षार्थमस्य सर्वस्य राजानं असृजत् प्रभुः" (म०); "अहं वो रक्षिता इत्युक्त्वा, यो न रक्षति भूमिपः, स संहत्य निहंतव्यः श्वा इव सोन्मादः आतुरः। (म० भा० अनु० अ० ९६); (२०); अधर्मदर्शी यो राजा बलादेव प्रवर्तते, असत्पापिष्ठसचिवो, वध्यो लोकस्य धर्महा (,,शां० अ० ९२); दुराचारान् यदा राजा प्रदुष्टान् न नियच्छति,तस्मादुद्विजते लोकः,सर्पाद्वेश्मगतादिव, तं प्रजाः नानुवर्तंते, न सद् विप्राः, न साधवः; ततः स क्षयमाप्नोति, तथा वध्यत्वमेव च × (,,अ० १२३);यो राजा लोभमोहेन किंचित्कुर्यादसांप्रतं,सर्वोपायैर्नियम्यः सः,यथा पापान्निवर्तते" (,, अ० २०३); "नृपार्थे सर्वभूतानां गोप्तारं धर्मं आत्मजं, ब्रह्म-(विज्ञान)-तेजोमयं, दंडं असृजत् पूर्वं ईश्वरः; दंडो हि वस्तुतो राजा, स नेता, शासिता च सः, चतुर्वर्णाश्रमाणां च धर्माणां प्रतिभूः स्मृतः; दंडः शास्ति प्रजाः सर्वाः, दंड एवाभिरक्षति, दंडः सुप्तेषु जागर्ति, दंडं धर्मं विदुर्बुधाः; समीक्ष्य स धृतः सम्यक्, सर्वाः रंजयति प्रजाः, असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः;

(धात्स्यं नामा पितेन् देशे, फ्रांसे लुई (६) तिनामक , राजा नष्ट प्रजाकोपात्, समीप तद्विदर्शन), यदि न प्रणयेद् राजा दण्ड दण्ड्येषु अतन्द्रित , शूले मत्स्यानिव अपक्ष्यन् दुर्बलान् बलवत्तरा ; सर्वो दण्डजितो लोको, दुर्लभो हि शुचिर्नर , दण्डस्य हि भयात् सर्वं जगद् धर्मे प्रतिष्ठते , (३०) , दुष्येयु सर्ववर्णाश्च, भिद्येरन् सर्वसेतव , सर्व लोकप्रकोपश्च भवेद् दण्डस्य विभ्रमात् , तस्याहु सम्प्रणेतारं राजान सत्यवादिन, समीक्ष्यकारिण, प्राज्ञ धर्म-काम र्थ कोविद, त राजा प्रणयन् सम्यक्, त्रिवर्गेणाभिवर्धते, कामात्मा विषम क्षुद्रो, दण्डेनैव निहन्यते, दण्डो हि सुमहत्तेजो, दुर्धरश्चाकृतात्मभि , धर्माद् विचलित हन्ति नृप एव सबान्धव , × सोऽसहायेन, मूढेन, लुब्धेन, अकृत बुद्धिना, न शक्यो न्यायतो नेतु, सक्तेन विषयेषु च , शुचिना, स सत्यसन्धेन, यथा शास्त्रानुसारिणा, प्रणेतु शक्यते दण्ड , सुसहायेन, धीमता × , मोहाद् राजा स्वराष्ट्र य कर्षयति अनवेक्षया, सोऽचिराद् भ्रश्यते राज्यात् , जीविताच् च, सबान्धव , शरीरकर्षणात् प्राणा क्षीयते प्राणिनां यथा, तथा राज्ञां अपि प्राणा क्षीयते राष्ट्र-कर्षणात्"(म०)। भगवान् हृदयो श्लोकै क्षत्रिय लक्षणं मनु —स एव ब्राह्मणो मान्य यस् तद्गुण विभूषित , स एव क्षत्रियो राजा धर्मो स रक्षकश्च य , समीक्ष्यकारी सद्वादी प्राज्ञ सच्छास्त्रकोविद ,(४०), न पुनर्ब्राह्मणम्मन्य क्षत्रियम्मन्य एव वा, गुणै सर्वैर्विहीनश्च, पापकर्मा च नित्यश , इमौ एतादृशौ दण्डौ मनुना उक्तौ पुन पुन । "दश सूना सम चक्र, दश चक्र-समो ध्वज, दश ध्वज समो वेश , दश-वेश समो नृप"(म०), 'चक्र' तु भैरवीचक्र अत्र, 'पद्' 'वधकीगृह', भोजनादि-प्रदानेन, 'धनैः' ऋणरूपिभि , विक्रीयते अबला 'दक्षा' पशुवद् यत्र, राक्षसै यत्र क्षीणा शरीराणि क्रीयते घोरपापिभि , रखैला तासो तथा जीवा पाल्यते रौर-वेष्यपि, (न तैलिकस्य 'चक्र' तु तावत् भवति दोषवत्, व्याख्यन्ति बुधि , यथा केश्चिद् लिख्यतेऽनवधानत ), 'चक्रे' अत्र तु हिंस्यते, 'सूनाया' पशवो यथा, ततोऽपि दारुणतरे प्रकारे पापभूमिते , लोलभार्यं शरीरं स्व स्त्री विक्रीणाति यत्र वै, शरीर तस्य क्षीणाति कृकरन् निर्दयो नर , स्व मातरं न स्मरति, न स्वसार, न पुत्रिकां, न क्षीतो न च सावित्रीं, ततो न्तर नु किं ? अबला व्याकुला यत्र रुदति च तपति च, निष्ठुरै अहिता दुष्टै , स्वकामस्यैव तृप्तये, विनश्यति अचिराद् राष्ट्र रात् तु, कृपाहत यथा। (५०)। 'ध्वज' थान् शौविकमपि 'चक्रा'दपि मयत्तर , यतो नरा मदमत्ता 'चक्राण' प्रविशन्ति हि; गृहत् शुल्क यद्यपानां, रक्षण कृष्णेन

वर्धित, अरण्य सर्वभूताना, मद्येनैव विनाशिन । 'ध्वजा'श्च दारुणा 'वेश्या', या नर्तनकलादिभि , न उषित्वा कृपणे 'चक्रे', 'भद्रान्' अपि विमोहयेत्, प्रलोभनैर् हावभावै , सुरामपि च पाययेत्, सुरापं चापि अकृत्येषु घोरेष्वपि निपातयेत्, सचारयेच्च अघ राष्ट्रेऽखिले, देहे विष यथा । "दश सूनासहस्राणि यो वाहयति सौनिक , तेन तुल्य स्मृतो राजा लुब्धश्च उच्छास्त्रवर्तन" (म०), यतो, ऐतेभ्यो नृप 'सूना चक्र ध्वज' वतोऽपि च, तथैव 'वेशाऽजीवाम्य", कर गृह्णाति निश्चय , गृहीत्वा च कर, तेषा पाप पुष्णाति भूरिश । 'यो राज्ञ. प्रतिगृह्णाति" तादृशाद् ब्राह्मणस्तु स पाप पोषणात् "याति नरकान् एकविंशति"(म०),राजान च प्रजाश्चापि निपातयति तत्र स । उदार आशयो ह्येष नून भगवतो मनो , न जाति प्रक्षु क्षग्राणा भगवान् अनुमोदक । ( ६० )। "ब्रह्मबन्धुर्न हन्तव्य सर्वपापेष्वपि स्थित "—इत्यस्मिन् विषये पूर्व विस्तरेण विचारित. स्थले अपि तथाऽऽगाधे येषा अविहता गति , देववद् विहरन्तश्च, प्रहरन्तश्च दैत्यवत्, यथेष्ट विभवन्तश्च सर्वत्र प्रभवति ये,अन्याय आचरन्तो अपि दुर्बलेषु पुन पुन , तेऽपि नैतादृशा यत्तु ईहन्ते खलु निश्चय—'न जातु हन्याद् अग्रेज सर्वपापेष्वपि स्थित, अग्रेजो नायमतस्य सद्असद् वा समाचरन्' । यैर् इन्द्रविद्युद् आच्छिन्ना, वायुर्बीजनक कृत , कृतौ कृशानु-वरुणौ दासी दीप प्रपा धरौ, अगुलि अग्र इङ्गितेन एव किंकरा धर्म कारिण , समर्था सर्वथा कर्तु, अकर्तु, ये, तथाऽन्यथा, न ईदृशा तेऽपि कल्पते, भ्रष्ट विदधते न वा, तस्मिन् दडविधाने, यद्, विहित तै , प्रयाते समस्ते भारते प्रप, व्यवधूय अभिभूय च स्मृत्यादीनि पुराणानि शास्त्राणि निखिलानि च । सुन्दोपसुन्दन्यायेन क्षय यास्यति तेऽपि यत्, तत् फल खलु पापाना तेषा , नास्मद्गुणै कृत । यत्र सर्वथाहुत्य दर्पोद्रेको, विरुचन वैर परस्पर, नाशो ऽध्रुव तत्र प्रवर्तते । (७०) । दृश्यते चेदृशा भावा बुद्धिविद्यावता अपि , दर्शिता तत् पुराणेषु सम्यग्दर्शिमहर्षिभि ,देवासुराणा सग्रामे , विश्वामित्रवसिष्ठयो ,रामरावणयोश्चापि कुरुपाण्डवयोस्तथा, 'ज्ञानिनामपि चेतासि देवी भगवती हि सा, बलाद् आकृष्य मोहाय महामाया प्रयच्छति" ( दु०स० ), सद्बुद्धिर् अथ विद्या च दुष्प्रकृत्या विवर्त्यते, "प्रकृति यान्ति भूतानि, निग्रह किं करिष्यति" (गी०), अत एव हि वेदऽज्ञा, 'विद्या दुष्टाय मा दिश', ' विद्या ह वै ब्राह्मण आजगाम, गोपाय मा शेवधिस् तेऽहं अस्मि, असूयकाय, अनृजवे, अयताय, मा मा दा , वीर्यवती तथा

स्याम्" (नि०)। "दुग्धपानं भुजगानां केवलं विषवर्धनं", शास्त्रदानं च दुष्टेभ्यः केवलं पापवर्धनं, 'भौतिकं' चापि 'विज्ञानं', 'अज्ञानेन' ■ पालितं, परस्परवधायैव पापिभिस्तु प्रयुज्यते, यथा पाश्चात्यजातीनां दुर्दान्तानां दशाऽद्य वै। हिन्दव 'शास्त्र शास्त्रे'ति 'वेद वेदेति' रावेण, न वेद शास्त्र मर्मज्ञा रहस्यानां न वेदिनः, अस-च्छास्त्रमहग्रस्ता, त्रस्ता सच्छास्त्रतो भृशं, परपादतले क्षिप्ता, दासा स्वेषु (भारतीयजनेषु) तथाऽप्यहो, दक्षम्यतोऽनिशं भीता, नीता मूढैर् अधोगतिं, दश प्रजप्यन्तिश्च, "सर्वपापेभ्यश्चरिष्यते"। (८०)। जन्मनैव हि वर्णस्य सर्वं विनी-ष्ठित स्थित्। एकजेभ्यो द्विजातीनां दवसीमतर इत मनुना—पूर्वं एव एतत् तत्त्वा वयरेव दर्शितं। निदर्शनं च पर्याप्त दृश्यता ऐतिहासिकं—रामो नाम महाराज, मर्यादापुरुष, स्वयं ब्राह्मणं निजघानेव रावणं 'कर्म राक्षसं', पुलस्त्यस्य कुले पौत्रं, महाविद्याधरं तथा, शास्त्राणां च सम्प्राणां कोविदं, भूशदुर्मदं, मारीचं, ताटका नारीं, भ्रातरौ खरदूषणौ, तथा त्रिशिरसं चापि, कुम्भकर्णं महाबलं, "यस्य प्रमाणाद् अधिकं प्रमाणं नैव विद्यते", रावणिं मेघनादं च, लक्ष्मणेन सहायवान्, ब्रह्म रक्ष-कुलं दुष्टं समग्रं चापि अशातयत्, सीतां हिंसितुं उद्युक्तां, स्वसारं रावणस्य च, निशाचरीं शूर्पणखां, लक्ष्मणेन तु अदण्डयत्, सैन्यमार्गं अददत्, समुद्र देव अपि भयात्, अवबन्धात् सतु मन्थेन, रज्ज्वा इव हि अपराधिनं, वसिष्ठं, वामदेवं च, विश्वा मित्रं महामुनिं, भरद्वाजं, तथाऽत्रिं चापि अनसूयां पतिव्रतां, शरभङ्गं, अगस्त्यं च, ब्रह्मर्षीन् प्रणनाम च, (९०), "यदा, हते दशग्रीवे, विललाप विभीषण, (विगत भीषणत्वं हि यस्माद्, धर्मस्याश्रयात्)—"आदित्य पतितो भूमौ, मग्नस्तमसि चन्द्रमा, अस्मिन् निपतिते भूमौ वीरे मम सहोदरे, × × × योऽस्य विमदेषु न भग्नपूर्वः, सुरैः समेतैः सह वासवेन, भवत आसाद्य रणे स भग्नो, वेला इवासाद्य यथा समुद्र, अनेन दत्तानि महाधनानि, भुक्ताश्च भोगा, निभृताश्च भृत्या रत्नानि मित्रेषु समर्पितानि, वैराणि अमित्रेषु च यापितानि, एषोऽ(ऽग्नि)-हिताग्निश्च, महातपाश्च, वेदान्तग, कर्मसु चाग्र्यवीर्य, एतस्य यत् प्रेतगतस्य कृत्यं, तत्कर्तुं इच्छामि, तव प्रसादात्;—तदाऽस्य वाक्ये करुणे, महात्मा, सम्बोधितः साधु विभीषणेन, आज्ञापयामास, नरेन्द्रसूनु, स्वर्गीयं आधानं, अदीनसत्त्व × × राम शोकसमाविष्ट इत्युवाच विभीषणं—नाय विनष्टो नि-श्चेष्ट, समरे चण्डविक्रम, अत्युदृतमहोत्साह, पतितोऽयं अशङ्कित, न पूर्वं

विनष्टाः शोच्यन्ते, क्षत्र धर्मं अवस्थिताः, वृद्धिं आशासमाना ये निपतन्ति रणाजिरे × × × इय हि पूर्वैं सदिष्टा गति क्षत्रिय सम्मताः क्षत्रियो, निहत संख्ये, न शोच्य इति निश्चय , (१००), तद् एव निश्चय दृष्ट्वा, ताथ आस्थाय, विज्वर , यद् इहानन्तरं कार्यं कल्प्य तद् अनुचिन्तय, × × × शतक्रतुसुरैर्देवै. श्रूयते न पराजित , महात्मा यस्सपञ्चो रावणो लोकरावण , मरणान्तानि वैराणि, निर्वृत्त न प्रयोजन, क्रियता अस्य संस्कारो, ममापि एष यथा तव " (वा०रा०ल०)। जन्मतो'ब्राह्मण'चापि, कर्मणा'क्षत्रिय' स्तु, सुन पुनर् निधनुते रावणं, लक्ष्मण प्रभ । न जन्म क्षत्रिया चापि चक्रु राम महायत्ता , सहाया अभवन्नस्य 'क्षत्रिया ' ऋक्ष वानरा । वालिन कपिराज च, भ्रातरि अन्यायकारिण, कृतसख्य रावणेन, न्यवधीद् एव पापिन, श्लिष्टेऽपि हनूमन्त, सुग्रीव च, विवेकत । कश्यप च हिरण्याक्ष 'जाति ब्राह्मण'मेव च, तथा हिरण्यकशिपुं, विष्णुर्व्यापादयत् स्वय । कृष्णश्च बलरामश्च मैन्द द्विविद वानरौ जघ्नतुर्मधुरायां वै, दुर्वृत्तावा तु भीषणौ, दुष्ट गोरूपञ्च चापि 'धेनुक ासुर'नामकं, 'गो ब्राह्मण' हितौ सन्तौ, 'गो-वर्धन' महत्करौ । (११०)। गो ब्राह्मणाना पूजा यद् हिन्दुभ्य उपदिश्यते, तत्पाद् विवेकाद् अर्थस्तु तस्याश्च व्यासितो बुधा , 'गावस्तु' मातृ वात्सल्य, 'ब्राह्मणो' ज्ञानसञ्चय , एतौ यथैव पूज्येते समुद्देशस्तु तु उच्यते , न मिथ्या ब्राह्मणाना वा पशूनां एव पूजनं । "दुष्टाना निग्रहश्चापि शिष्टाना चापि सग्रह ", इत्येव राज्ञो धर्मोऽस्ति, गोषु वा, ब्राह्मणेषु वा, नृषु, स्त्रीषु अपि, तिर्यक्षु, रक्ष सु अपि, असुरेष्वपि । विष्णुना प्रापितो राज्य प्रह्लादश्च, विभीषण , पिता विशश्रवस्तु एकस्य, भ्रातरौ अपरस्य च । ' पिता, आचार्य, सुहृन् माता, भार्या, पुत्र पुरोहित , न अदण्ड्यो नाम राज्ञोऽस्ति, यः स्वधर्मे न तिष्ठति" (म०) । ' किं अनडुहा यो न वहेत्, कोऽर्थो राज्ञाऽपि अरक्षता ? यथा दारुमयो हस्ती, पथि क्षेत्र यथा ऊषर, तथा विप्रोऽनधीयानो, राजा यश्च न रक्षिता, नित्य यस्तु सतो रक्षेद्, असतश्च निवारयेत् , स एव राजा कर्तव्य , तेन सर्वमिद् धृत ' (म० भा० शां०) । 'कर्तव्य ' इति शब्देन,प्रजानां दर्शिता स्फुट शक्तिश्चापि, अधिकारश्च, राजत्वे विनियोजने धीरवीरनरस्यैव, भूषित स्य च सद्गुणै । ( १२० )। आयत्तं लोककल्याणं 'द्वि अन्तेषु' 'द्वि जे स्थिति, आत्मज्ञ शिक्षके चापि, रक्षके, पोषके तथा । ' माता, पिता, तथाऽऽचार्य , त एव

त्रयः आश्रमाः, त्रयो लोकाः, त्रयो वेदाः, ते एवोक्तास्त्रयोऽग्नयः ; त्रिषु अप्रमाद्यन् एतेषु, त्रीन् लोकान् विजयेश्वरः" ( म० )। आचार्यः शिक्षकस्तत्र, पितृस्थानी च रक्षकः, मातृस्थानी पोषकश्च, लोककल्याणकारकाः। दुर्विप्रो, दुर्नृपश्चापि, दुःस्त्री, यद्वत् तु निन्दिताः मनुना ; सन्-नृपः, तद्वत्, सती स्त्री, साधु-शिक्षकः, देवेभ्योऽप्यधिकं तेन मनुनाश्च प्रशंसिताः। (ग) "यत्र नार्यस्तु पूज्यंते रमन्ते तत्र देवताः, यत्रैतास्तु न पूज्यंते सर्वास्तत्र-अफलाः क्रियाः; × शोचंति जामयो यत्र विनश्यत्याशु तत्कुलं, न शोचंति तु यत्रैताः वर्धते तद्धि सर्वदा ; × तस्माद् एताः सदा पूज्याः भूषणाच्छादनाशनैः, भूतिकामैर्नरैर्नित्यं सत्कारेषु उत्सवेषु च; × प्रजनार्थं महाभागाः पूजार्हाः गृहदीप्तयः ; स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ; उत्पादनं अपत्यस्य, जातस्य परिपालनं, प्रत्यहं लोकयात्रा च, प्रत्यक्षं स्त्रीनिबन्धनं,(१५०); अपत्यं, धर्मकार्याणि, शुश्रूषा, रतिरुत्तमा, दाराऽधीनः, तथा स्वर्गः पितॄणां आत्मनश्च ह ; उपाध्यायान् दशाऽऽचार्यः, शत्-आचार्यांस्तथा पिता, सहस्रं तु पितॄन् माता, गौरवेणातिरिच्यते" ( म० ) ; ब्राह्मणात्, क्षत्रियाच्चापि, शिक्षकाद्, रक्षकादपि, पोषकस्थानिनी माता, गुरुत्वेन विशिष्यते ; एवं आद्रियते अस्माभिः स्त्री मनुर ; न तु निन्दति। "द्वारं [illegible] एकं नरकस्य ? नारी"—स्याद् उक्तं एतम् नर-केण केन चित् ; 'द्वारं नरो वै नरकस्य चैकं'—नारी च यन्तु न कथं समर्थौ ? 'नरो'हि यः 'कुत्सित'-भाव-पूर्णः, ततश्च यः 'कुत्सित'-कर्म-कारी, स वै 'नरः कुत्सितः' एव बुधः जनैः 'अयं नर-को हि अस्ति साक्षात्'। श्रीभ्रमीर्धर्मवीराणां भीष्मोऽप्याह पुनः पुनः—"एवं स्त्री नापराप्नोति, नर एवापराध्यति ; व्युच्चरंश्च महादोषं नरः एवापराध्यति ; नापराधोऽस्ति नारीणां, नरः एवापराध्यति ; सर्वकार्यैऽपराध्यत्वात् नापराध्यंति च अंगनाः" ( म० भा०, शां०, अ० २७२, चिरकारिउपाख्याने )। स्त्रियै पुमान्, यथा पुंसे स्त्री, संसृतिभयप्रदः ; तुल्यरूपेण चैवैतत् प्रोक्तं भागवते स्फुटं; निवृत्तिमार्गिणी नारी तथैव विभियात्वरात्, यथा 'निवर्तमानो' ना (नरः) नार्याः भीयात् समंततः।(१५०)। "स्वभावः एष नारीणां नराणां (च) इह दूषणं (परस्परं); अतोऽर्थान् न प्रमाद्यंति प्रमदासु विपश्चितः"(म०); नारीणां च नराणां च दूषणं हि परस्परं ; उभौ अपि क्षोभयेते, संनिधौ, इतरेतरं; सांख्येषु पूर्वैः संख्यातं, पुरुषप्रकृती यथा। इच्छाशक्त्यधिका नारी, ज्ञानशक्त्यधिकः पुमान् ; योषा तु माया-बहुला, नरो बोधाधिकस्तया; प्रकृत्या निर्मितिस्तु एवं प्रत्यक्षं लक्ष्यते तयोः ; तत्र

च, उत्तरदायित्व भूयान् योधो हि यस्य वै , आनन्द , प्रमदो नाम, 'हर्षक' स 'प्रमाद्येव्' , इच्छापूर्त्यो तथाऽनन्द , स्त्रीनाम 'प्रमदा' तथा ; नरं एव आदिशति अस्मात्, सर्वज्ञानमयो मनु , "कोमल स्त्रीति नामैव", स्त्रीषु तस्माद् दयामय , "प्रमाद्येयुर् नरा नैव प्रमदासु विपश्चित ", आत्मान च स्त्रिय चापि रक्षेयुर् दुष्कृतात् सदा , सतीना च तथा धर्म तेनऽदिष्ट पुन पुन ,अन्यैर्महर्षिभिश्चापि, "शीलरक्षाऽग्रमन सदा" ।१ 'नरो' 'नारी' च शब्दौ तौ 'काम स्वैवात्र वाचकौ,

१ वराहमिहिरोऽपि एव स्वे 'बृहत्संहिता'ऽभिधे, भ्रम तु भर्त्सयामास दुष्यन् नारीविनिन्दकान्, उदार प्रयासापि सतीर्वोपा स्वहरियनी —"ये ह्यङ्गनानां प्रवदन्ति दोषान् वैराग्यमार्गेण, गुणान् विहाय, ते दुर्जना एव हि दुष्टभावा ; सद्भाववाक्यानि न तानि तेषां । प्रब्रूत सत्य,कतरोऽङ्गनानां दोषोऽस्ति यो नाऽचरितोऽस्ति पुम्भि ! धार्ष्ट्येन पुम्भि प्रमदा निरस्ता , गुणाऽधिकास्ता , मनुनाऽत्र चोक्त, 'सोमस्तासां प्रदात् शौच, गन्धर्वो शिक्षितां गिरं, अग्निश्च सर्वभक्षित्व, तस्मान्निष्क ( स्पर्श ) समा ( स्त्रिय ) स्त्रिय , ब्राह्मणा पादतो मेध्या , गावो मेध्यास्तु पृष्ठत , अजाऽश्वा मुखतो मेध्या , स्त्रियो मेध्यास्तु सर्वत , स्त्रिय पवित्र अतुल, नैता दुष्यन्त कर्हिचित्, मासि मासि रजो यासां दुष्कृतानि अपकर्षति , जामयो यानि गेहानि शपन्ति अप्रतिपूजिता , तानि कृत्याहतानीव, विनश्यति समन्तत ' , मनोर्वाक्यानि उदाहृत्य, वराहमिहिर स्वय, स्व शब्दैरेव लिखति, विषये प्रस्तुते पुन—"जाया वा, जननी वा सम्भव स्त्रीकृतो नृणां , हे कृतघ्ना ! तयोर् निन्दां कुर्वतां व कुत सुख ? दम्पत्योर् व्युत्क्रमे दोष सम शास्त्रे विनिश्चित , (१०) , नरा न तं अवेक्षन्ते , तेनात्र वर अङ्गना , अहो धार्ष्ट्यम् असाधूनां निन्दतां अनघा स्त्रिय मुष्णतां इव चौराणां 'तिष्ठ चौर !' इति जल्पतां!" । चतस्रोऽनुष्टुभ ,पूर्व ,या 'मनोर्'इति उदाहृता, एका आसां आत्मना इदानीं लभ्यते हि मनुस्मृतौ , तिस्रोऽन्या अन्यस्मृतिषु प्राप्यन्ते न पुनर्मनौ , एव अन्ये कियन्तोऽपि मनो श्लोका उदाहृता , रामायणे, पुराणेषु , भारतस्य च पर्वसु, अन्येष्वपि प्राग्ग्रन्थेषु, येऽप्यादृश्या मनुस्मृतौ , ईदृशैर्हेतुभिस्तर्कोऽयं तु सिध्यति असशयं, यद् भूरि लोपा क्षेपाश्च पाठे प्रचलिते कृता । उद्योगपर्वणो, नीतेर्विदुरस्य हि धीमत , निदर्शनायोदृर्यन्ते श्लोका अत्र तु केचन—"सप्तदश इमान्, राजेन्द्र !, मनु स्वायम्भुवोऽब्रवीत्, वैचित्रवीर्य !, पुरुषान् , आकाश मुष्टिभिर्घ्नत , तानेव च इन्द्रस्य धनुर् अनाम्यं नमतोऽब्रवीत्, अथो मरीचिन पादान् अग्राह्यान् गृह्णतस्तथा ; 'यश्चाशिष्यं

न चापि परम धर्म घोषयति अ भियो ऽ ह्यिय , ज्ञात्वापि तत्सजातीया धर्पणा मर्पयंति ता, न च जातेर्बहिष्कर्तु साहस तांस्तु कुर्वते । सानन्द भक्षयन्त्येव मानवा पाशवान् शवान् , "मत्स्याद सर्वमासाद , तस्मान् मत्स्यान् विवर्जयेत्"— इत्याज्ञा तु मनोर्लिख्य भञ्जन्ति पुव हि ये जना ,(११०), उच्चमन्या , द्विजीभूता , तेऽस्पृश्यान् यद्वदति वै, धाष्टर्याद् अपरजातीयान् , दम्भस्य महिमा हि स ।

---

अपासरत्" ( नैषध, सर्ग १७) । ( ८० ) । कलेर्मिपेण श्रीहर्ष एव घर्षयति, ध्रुव, 'वेदपडित'-'पालड' 'भडस्य' 'धकाडतांडव' । ईदृग् कामस्तु वामस्य तन्त्रस्योपपत्तिरस्ति वै, पश्चात्तो च स महात्मा स्वीकारस्यान्धबुद्धिभि । कस्माद् एवविधा मता विषय ध्योपपादिता वेदेषु, तत्तु, असदिग्ध, नहि निश्चीयतेऽधुना, लज्जा गोपायितु यत्नो मैमांसैस्तु प्रसार्यते, विस्तार्यते च वाग्जाल बहुकोलाहलाप्लुत , जनता हृदय किंतु कर्म सर्व हि तादृश, वेदाना कालिमा-कारि ध्रुवम राक्षसमत्यजत् । व्यस्यतेऽर्थ कथ सत्याद्, दर्शयत्यपि तत्, कलि —"बलात्कुरुत पापानि, सतु तानि अकृतानि च , 'सर्वान् बलकृतान् दोषान् अकृतान् मनुर् अब्रवीत्', श्रुतिस्मृत्यर्थबोधेषु नैकमत्य महाधिया ? 'व्याख्या बुद्धिबलापेक्षा', सा नोपेक्ष्या मुखोन्मुखी ।" आह असौ सत्य मप्यर्थ किंचिद्, बहु वदन्, कलि , "ईर्ष्यया रक्षतो नारीर्, धिक कुलस्थितिदाम्भिकान्, स्मरान्धच ।विश्वपेऽपि, तथा नर अरक्षत , तृणानीव गृहागादान् विधूनय वधूर् अतु, तथापि तादृशस्यैव (श्लेष्ममांसादिमयस्य) का चिर जनवञ्चना ? (९०), .. प्रलापमपि वेदस्य मार्ग मन्यध्वे एव चेत्, केनाभाग्येन तु तान् न विधीनपि तथा दृच्छथ ?" ( तत्रैव ) । यथैव मानवे देहे, ऊर्ध्व अन्न, अधो मल, नाभेर् उपरि मेध्यत्व, अमेध्यत्व अधस्तथा, तथा उपनिषदो, वाममत-मता अपि, श्रुतौ , सावधानेन सग्राह्य, त्याज्यं, सुष्ठु च, दुष्ठु च । निष्कर्षोऽस्मिन् प्रसगेऽस्य विचारस्य एष एव हि—नऽात्मसभाविर्तैर्भाव्यं, ब्रह्मवनिभिरेव वा, हिन्दुभि , स्वस्य वै दोषा मष्टव्या मलतस्त्यथा; त्यज्यते यद् ( यदि ) हठ ते , तत् ( तदि, तदा ) चिरमन्यैश्च त्यज्यते । आत्मवत्तु, विवेकेन, मनुष्यान् अपरान् अपि, कर्म वर्ण व्यवस्थात समाने सुविभाजितान्, अवस्थासु विभिन्नासु, यो परिदृष्टु ईहते, आत्मान परांश्चापि आपद्भ्यस् सतारयिष्यति । एकत्वभावदीनत्व, अस्पृश्यत्व तथाऽन्यत , एकतो दाशनाभाव , ऐश्वर्यान्धत्वमन्यत ,यो हि मत पादस्य रज निर्वर्तनलाभ, परे दिने, स

भिन्ननास्तेमंनुष्यस्य स्पर्शंन वजयति ये, नित्यमेव गिलग्यंते ह्यन्त कुणप पशो ! अहो दम्भस्य माहात्म्य अहो ह्कारविभ्रम , वैपरीत्य अहो बुद्धेर, अहो मोहस्य चडिमा !

मनुनतु सुरापा महापातकपचके गणयति, अपरे किन्तु स्मृतिकारा तदेव हि, परिसख्याविधानेन, चातुवर्ण्यऽनुमन्यते, विष्णुस्मृतिर्यथा वक्ति, विप्रस्वे माद्वीं पिवेत्, क्षत्रियो न्या अपि तथा, वैश्य , शूद्रोऽपि वा, तथा । इम्या

---

एव सप्राप्य धन, शिरास्यारोढुमिच्छति परेषा यथा धूलिरुत्पात्याऽऽस्टा विधूर्णिता, साधु एकत्र पुराण हि, नवमेव पयनस्तथ , (१००) , सकरऽाकुलता एकत्र, कुत्र वैमुख्य चान्यत पाशारज्जुर् उभयत यथा चमो न दृश्यते स्यजे व्याघ्रा, पले भक्ष , येन मागधा गम्यना ? हिन्दूना अन्यधर्मभ्य प्रयावर्तनस्वंगि, 'शुद्धि' रीत्या, तथाऽन्येषां प्रहणे नव दीक्षया, हिन्दू समाने, या ईदृक् शका उभयत स्थिता, निरस्यते तमस्तासा, कर्म वर्ण प्रकाशात । कर्म-वर्णस्य सिद्धान्त यथा चन्द्रतम सदा, सर्व-सगमन सर्व-सवादी निरुपद्रव । एतत्स्मर्तव्यमन्यच्च, प्रसगेऽस्मिस्तु हिन्दुनि —ईसवीयाब्दात् त्रयोदशात् आरभ्य, अनविंशतेः पर्यन्त अभवन् यानि मुख्य युद्धानि, तानि तु सख्यया द्वे शते ऽभूवन परिस्तेषाचु भूयसी हिन्दोरेव ।भवन् मध्ये तावत्स्येव च भूयसी इस्लामधर्मिणोमध्ये , द्वयोरप्येव एकत्र स्थिता राजानो हिन्दवो ये हि, मुस्लिमा अन्यतो नृपा , प्राय सर्वेषु युद्धेषु, हिन्दवो, मुस्लिमा तथा, योधा , प्रत्येकपक्षेऽपि परस्परसहायका । (११०) । ( वर्षात् त्रयोदशात् पूर्व अस्मात् , ( मार्च मासे, १९३१ ई० वर्षे), कानपुरे पुरे, उपद्रवो महान् आसीद् हिन्दू मुस्लिमयोर्मिथ , काश्यामपि ततोऽप्यऽभूत् किंचिदल्पतरस्तन , कराच्या च तदैवऽासीत् (मार्च १९३१ ई०) कांग्रेसस्याधिवेशन , उपद्रवस्य हेतूंस्तु निश्चेतु तेन निर्मिता समिति षण् सदस्याना , त्रयस्तत्र तु हिन्दव , त्रयश्च मुस्लिमा आसन् , प्रधानोऽस्य जन कृत , त्रीन् मासांश्च पुरे तस्मिन् कृत्वा अन्वेषण हि ते , पश्चाच् चतुर्भिर्मासैश्च विज्ञप्तिर्लिखिता तथा काश्यामेव , इतिहास त्र, भारते मुस्लिमागमाद् आरभ्य, व्यवहारस्य उभयोश्चापि परस्परं, विरोधस्य पि, साहाय्यस्यापि, तत्र प्रदर्शित , बहून् ग्रन्थान् विनिर्मथ्य प्राक्तनान् ऐतिहासिकान् , आग्लराज्ये यथा चाभूद् वृद्धि द्रोहस्य चानयो , तत्सर्व विस्तरेणास्यां विवृतौ प्रतिपादितं , तदैव सख्या पूर्वोक्ता युद्धानां गणिता —इति ) । (११८) ।

मनुस्मृतिर् नूनं मांसं बहु विनिन्दति ; राजसीं प्रकृतिं दृष्ट्वा क्षत्रियाणां तु, कर्म च, तेभ्यः तद् अनुजानाति, श्लाघमानाऽपि वर्जनं ( म० ) ; "न मांस-भक्षणे दोषो, न मद्ये, न [redacted] मैथुने; प्रवृत्तिरेषा भूतानां; निवृत्तिस्तु महाफला ; मां सः भक्षयिताऽमुत्र यस्य मांसं इह अद्मि अहं, एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः; न-कृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् , न च प्राणिवधः स्वर्ग्यः, तस्मान्मांसं विवर्जयेत्; (१२०); योऽहिंसकानि भूतानि हिनस्त्यात्मसुखे-च्छया, स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ; यो बंधनवधक्लेशान् प्राणिनां न चिकीर्षति, स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ; यद् ध्यायति, यत्कुरुते, धृतिं बध्नाति यत्र च, तदवाप्नोत्ययत्नेन, यो हिनस्ति न किंचन ; समुत्पत्तिं च मांसस्य, वध-बंधौ च देहिनां, प्रसमीक्ष्य, निवर्तेत सर्वमांसस्य भक्षणात् ; अनु-मन्ता, विशसिता, निहन्ता, क्रय-विक्रयी, संस्कर्ता च, उपहर्ता च, खादकश्चेति घातकाः ; वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः, मांसानि च न खादेद् यः, तयोः पुण्यफलं समं ; फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः, न तत्फलमवाप्नोति यन्मांसपरिवर्जनात्" ( म० ) । आरण्याः जन्तवो यस्मात् कृषिं हिंसन्ति भूरिशः, मृगयायां वध. तेषां, तथा तन्मांस-भक्षणं, 'राजन्यैः' 'रक्षकैः', क्षत्रैः, कथंचिद् अनुमन्यते ; शान्तस्यऽलेटक-स्यापि सद्यः प्रस्तुतमेव तद्, भोज्यं ; न अवश्यमेवोऽस्य स्याद् ; विचारैरीदृशैरपि । परमांसैः स्वमांसस्य पुष्टौ,स्वादाय चैव हि, अहिंसकानां सौम्यानां पशूनां हननं, ननु, स्वगृहे पालयित्वा च,भक्षणं—पापमेव तत् । (१२०) .कार्ये स्वात्ययिके प्राप्ते, विशेषेण च हेतुना,अपि हृदयस्थानां च हननं अस्तु वैधं, [redacted] धार्यते; यथाऽनुज्ञातमेवाप्तैः "औषधार्थे सुरां पिबेत्";"लोके व्यवाय-आमिष-मद्य-सेवा नित्यास्ति जन्तोर्, नहि तत्र चोदना, व्यवस्थितिः तासु विवाह-यज्ञ सुरा-ग्रहैः;आसु निवृत्तिरिष्टा"(भा०) । भीष्मोऽप्यनुवदत्प्रथं मनूक्तं प्राह सद्वचः, "उत्तमं भोजनं मांसं, द्वितीयं गोरसः स्मृतः, × न [redacted] मांसं तृणात् काष्ठाद् उपलाद्वापि जायते, हत्वा जन्तुं ततो मांसं, तस्माद्दोषो हि भक्षणे" (म० भा०) । "गोत्रचिह्नं शिखाकर्म", हिन्दुत्वस्य न मर्म तद्, इत्याह शबरस्वामी मीमांसा-सूत्र-भाष्ये ; "यथर्षि शिखां दधाति, यथा वा पूर्वां कुलधर्मः;दक्षिणतः कपुजा वासिष्ठानां; उभयतः शिखा काश्यपानां;मुण्डाः भृगवः ; पंचचूडाः आंगिरसाः" ( शाबरभा० ) । यज्ञोपवीतं भ्रष्टं चेत् नवीनं विध

धार्यते ? एतदर्थं मन्त्रो हि ऋषिभिर्निर्दिष्ट किल—"यज्ञोपवीत परमं पवित्र, प्रजापतेर्यत्सहज पुरस्ताद्, आयुष्यमग्र्य प्रतिमुञ्च शुभ्र, यज्ञोपवीत बलमस्तु तेज"। "सहयज्ञा प्रजा सृष्ट्वा" इत्येवार्थोऽत्र नु कथ्यते। अन्यद् अत्र विचार्यं स्यात् 'जन्मना' यदि वर्णता, केनापि पातकेनेय कथमेवापयास्यति ? (१४०)। ब्राह्मण, क्षत्रियो, वैश्य, शूद्रो वा, मुस्लिमोभवन्, जन्मनैव कृता स्वीया नैव हास्यति वर्णता। 'कर्मणा' चेद् इयं, नूनं, वियुज्येत विकर्मणा, सयुज्येत पुनश्चापि वा उपयुक्तेन कर्मणा। एतत्सर्वं तु विस्मृत्य धर्महेतु, असद्ग्रहा, धर्ममर्मानभिज्ञाश्च, 'धर्म धर्मेति' राविण, मोहान्धा, दाम्भिका, पापा, दयार्हेष्वपि निष्ठुरा, स्वभ्रातॄन्, पीडितान् अन्यै, पीडयन्ति अधिकं पुन, कश्चित् स्वाङ्गानि यथा उत्कृत्य दद्याद् व्याघ्राय वै, यथा, तथैवैतेऽन्यधर्मभ्यो स्वकीयान् प्रददत्यपि, हिन्दूसमाजं सरलं पाताल नेतुमुद्यता। हिन्दवो 'नीच'जातीया, 'उच्च मन्यैस्तिरस्कृता, प्रत्यह यान्त्यन्यधर्मान्, पूर्वमेव इति वर्णित। अन्ये 'धर्मध्वजा 'सति, धूर्ता 'धर्मधुरधरा', 'धर्माधिकारिणम्मन्या', विप्ररूपधरा भटा, उपायैर्विविधैर्ये स्वार्थसाधनतत्परा, मात्र वर्णयितु शक्या तेषा नु वितता कथा। किन्तु सन्त्यन्यनेतार, सुभद्रा, दूरमानिन, निर्व्यलीक च हिन्दूना पीड्यन्ते ये च पीडया, (१५०), तापितानां कम्पितानां निर्व्याजमनुकम्पिन, दु खिता परदु खत, तेषा च समवेदिन, पराधिनश्च, आर्यशीला, उदारा, हृदयालवो, व्यापारे चापि सक्रुद्धा ये परेषां तु हिन्दुषु, ते विश्वसन्ति—'युद्धेन विजेष्यामो रिपून् वय, बलेन गभिभविष्याम उद्धतान् अन्यधर्मिण', तत 'सगठन' चापि हिन्दूना यातयन्ति ते, धर्मध्वजैश्चोत्साह्यते कार्येऽस्मिन्, मूढया धिया, 'प्रभुताऽस्माकमेव इते भविता धर्मभूर्द्धतो'। 'समन्थन, 'सघटनं', सिध्यतीह नैव तत्, यतस्तु हृदय शूर एषां, धीस् तु न मार्मिकी, न अन्विष्यति निदाम तु, न सा गम्भीरदर्शिनी, हिन्दूना नेक्षते दोषान् परेषामेव पश्यति ; अत्याचाराक्रान्तास्कारिकान् एव दृष्ट्वा प्रकुप्यति, प्राकृता नीतिरेवास्या—"दोष कोपेन पूरयेत्"। आत्मीयाना रक्षण च, रक्षण चाप्मनस्तथा, अवश्यमेव कर्तव्य सर्वोपायैस्तु नियत, "आततायिनमायान्त हन्यादेवाविचारयन्", "शठ प्रति शठ कुर्यात्, सादर प्रति सादर"। कार्यसिद्धिस्तु हिन्दूनां किन्तु नैतावतैव हि, (१६०), एतेन तु सर्वान्यत् कृत्य गुरुतर किल। आक्रम प्रतिकाराय नून शक्तिरपेक्षिता, न सा विना 'सघट्टन', "सघे शक्ति-

कलौ युगे"; नैव 'संग्रहणं' शक्यं, 'संघः', 'सहननं' मिथः, 'संघातो', नैव हिन्दूनां, यावत् स्यान् 'जन्म-वर्णता'; इत्येतद् विस्तरान् पूर्वं अस्मिन् ग्रन्थे प्रदर्शितं। परेषां तु विरोधाय 'संधिः', 'संघः', क्रियेत यः, न स्थिरो बद्धमूलोऽसौ; गलत्येव अचिरात्तु सः। "परैः परिभवे प्राप्ते वयं पंचोत्तरं शतं" (म० भा०), इति क्षणिकः एवाऽभूत् संधिः अन्योन्यवैरिणां पांडवानां कौरवाणां, गंधर्वैः सह संयुगे। ईसाविंशशताब्द्यादौ विश्वयुद्धे तथाऽभवत्; यानि राष्ट्राणि युद्धाऽऽदौ संहितानि अभवन् दृढं, विजयानन्तरं तानि एव अकुर्वन् वै परस्परं। भीमस्य तु तदैवाऽऽसीत् मतिः कौरववैरिणी, "अस्माभिर्यदनुष्ठेयं गंधर्वैस्तदनुष्ठितं, किमर्थं मोचयिष्यामः शत्रून् बद्धान् परैः"—इति (म० भा०); "परस्परविरोधे तु वयं पंच, शतं च ते"—इत्येव नीतिस्तत्राभूत् शाश्वती पंडवाश्रिणी। (१७०) शतानामेकतश्चापि, पंचानामेकतस्तथा, संधिर्योऽभूद् दृढः, सोऽयं आस्थ्योस्तु व्य-वर्धत, यतो नैसर्गिकी प्रीतिरभवत् तत्र कारणं, परस्परहितायैव, परस्परविभूतये, आत्मनां मंडनायैव, नान्येषां खंडनाय तु। हिन्दूनां ननु जातीनां भीमस्येवाऽस्ति यैं मतिः; एकस्यां पीड्यमानायां जात्यां अन्या तु मन्यते 'अस्माभिर्यदनुष्ठेयं अ-परैस्तदनुष्ठितं'। वदंति केचिद्विमास्तु—'कृषेः प्रावरणं, यथा, पशुभ्यो रक्षणायैव, क्रियते कंटकादिभिः, तथा द्विजानां प्राकारो भवंति अद्विज-जातयः'। वृथा कापुरुषी नीतिः, रक्षकाः यत्र भक्षकाः, पोषकाः शोषकाश्चैव, शिक्षकाश्चापि तक्षकाः, "यस्यांके शिरः आधाय जनः स्वपिति निर्भयः, स एव तच्छिरश्छिन्द्यात्", एवं विश्वास-घातिनी (म० भा०), न इयं नीतिः फलत्यत्र फलमाशासितं किल। कंटकानि तु भक्ष्यंते उष्ट्रैराक्रमकारिणो, कृष्यश्चापि चर्व्यंते तद्द्वारोष्ट्रैः सुखेन हि। 'संमन्थन' भव-स्थायां शल्यां, मरुमरीचिका। जेष्यंति संग्रहेणैव, विग्रहेण न हिन्दवः।(१८०)। उपायः एक एवाऽयं जगद्विस्तारकारकः, न केवलं तु हिन्दूनां, अपि वै सर्वधर्मिणां सर्वेषां मानवानां तु, येऽद्य द्रोहैरुपद्रुताः। "कृणुध्वं विश्वमार्यं" हि, वेदाज्ञा एषा एव पाल्यतां, सर्वेषामपि धर्माणां मेलनं क्रियतां मिथः। प्रकारस्त्वस्य चैवैकः, न द्वितीयः प्रतीयते; चतुर्वर्णान्तरे एवैते आनीयेरन् समन्ततः, सर्वेषामेव धर्माणां समन्याः अनुयायिनः; धर्मग्रन्थाश्च सर्वेषां, पूज्याश्च गुरवस्तथा, वेदांशाः एव मन्यंतां, अवतारास्तथैव च। "यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा, तत्त-देवावगच्छ त्वं मम तेजोंऽशसम्भवं" (गी०)। ये केऽपि संति सद्ग्रन्थाः "वेद एव

तु सर्वत्र " ( म० मा० ) । 'ज्ञानिन' सर्वदेशेषु सर्वजातिषु सन्ति वै, तथा साह-सिका'श्चापि, शूरा. ये रणकर्मणि, एवं वार्त्तासु 'दक्षा'श्च, तथैव 'भृत'-जीविन , 'ब्राह्मणा ', 'क्षत्रिया ' 'वैश्या ', 'शूद्रा ' चेति तथा, अर्थात् , संज्ञयाऽपि कुतो न स्यु' तेऽपि, यद्वत्तु हिन्दव ? हिंदुजातिमहस्राणां चतूराशिषु भाजनं यथा, तथैव सर्वेषां मानवानां भविष्यति । (१९०) । ये ज्ञानवृद्धा यत्रैव भवेयुर्धर्मचिन्तका , सत्यसत्यदयायुक्ता ,'ब्राह्मणो वितनुश्चय ,प्राप्नुयुर् नहि कस्मात् ते उचिता 'ब्राह्मण'-ऽभिधा ? देशवेशोक्तिभिर्भिन्ना , इष्टोपास्तिभिरेव च, ब्राह्मणानां तु हिन्दूनां शतधा सन्ति जातय', भेदास्त्वन्येऽपि सन्ति एवं, सर्वां ब्राह्मणसंज्ञका , कथं दोषाय सत्या सा स्याद् दश द्वादशाधिका ? मा स्मात्सुमां विवाहसुवां हीते ननु परस्पर, वृत्त वर्णानुरूपं चेत् संज्ञा कस्मात् निवार्यते ? ( १ ) 'पादरी कुर्जिमन् प्रीस्ट डिवैन'-इत्यादय , तथा ( २ ) 'मौलवी मुल्ला-हाफिज-मुफ्ती मुल्ला-पीर् मुर्शिद्' आदय , तथा ( ३ ) 'मोबद्' च 'दस्तूर ', ( ४ ) 'भिक्खवो' (५) 'यतय'स्तथा, एवमन्येऽपि बहव , तत्तत्संज्ञाभिर् कुत्सिता , (१) ख्रीस्तीया ब्राह्मणा सन्ति, (२) मुस्लिमा ब्राह्मणास्तथा, ( ३ ) पारस्या ब्राह्मणाश्चापि, (४) बौद्धा , (५) जैनाश्च ब्राह्मणा , एवं क्षत्रिय विट् शूद्रा सर्वधर्मेषु सन्ति वै, सर्वत्रापि च देशेषु, सर्वमानवजातिषु । देवता भारतीयानां शतशश्च सहस्रश सन्त्येव , तत्र तत्रान्या दश चाऽप्यथ विंशति । (२००) । 'तिरुभाण्डेश्वर'श्चास्ति, तथा वै 'कर्दमेश्वर ', 'घटेश्वर'स्तथै वास्ति, तथा वै 'पर्वतेश्वर ', 'नागेश्वर'स्तथा चास्ति, तथा वै 'नर्मदेश्वर ', अपि 'नारेश्वर आस्ति, 'नरसिंहेश्वर'स्तथा, 'श्रीगिरीश्वर' एवापि, 'वृष नन्दीश्वर'स्तथा, 'शृङ्गेश्वर'श्चापि, 'दण्डपाणीश्वर'स्तथा, 'चतुर्मुखेश्वर'श्चास्ति, तथा 'पञ्चमुखेश्वर ', 'दुग्धनाथेश्वर'श्चास्ति, 'वैद्यनाथेश्वर'स्तथा, 'सिंहाचलेश्वरो'प्यस्ति, तथा वै 'जम्बुकेश्वर ', 'गृध्राचलेश्वर'श्चास्ति, तथा वेदाचलेश्वर ' ; अन्येऽपि सन्ति अस्य ख्येया तीर्थेषु 'एनाक्षीश्वरा ' , 'वराहो', 'वामन ' 'कूर्म ', 'सुग्रीवो', 'हनुमाँस्' तथा, 'गरुड'श्च, 'एकदन्त ' च, 'लम्बोदर-गजाननौ','अष्टबाहु ','चतुर्बाहु ', 'अष्टादशभुजेश्वरी', यत् किंचिदश्मपिंडं च, मृन्मयी मूर्तिरेव वा, तथा दारुमयी वाऽपि, कृत्रिमा,ऽकृत्रिमाऽपि वा,ताम्रादि निर्मिता वाऽपि, चरित्रा वाऽपि कीदृशी, वटादि वृक्षाश्चैवापि,तथा गो सर्प वानरा , पूज्यन्ते सर्वे एवैते हिन्दुभिर्दीनबुद्धिभिः, श्रद्धया च, उपदेशाच् च स्वेषां 'धर्माधिकारिणां' । (२१०) । वेदान्ते च प्रसिद्ध

यद् "अचैतन्यं न विद्यते", अतो यावन्ति वस्तूनि तावन्तः सन्ति च 'ईश्वराः'। का हानिर्यदि मान्येत तत 'काबा ईश्वरो'ऽपि स, 'मक्का ईश्वर'स्तथैवापि मान्येत 'मदिना ईश्वर', 'मसूद ईश्वर' स्तथा चापि, तथा 'करबला ईश्वर','दरगाह-ईश्वर'-श्चापि, तथा च 'तकिया ईश्वर', 'पत्र ईश्वर' स्तथैवापि, तथा 'मकबरा ईश्वर'? मुस्लिमानामीदृशानि देवतीर्थानि सन्ति हि, 'अल्ले'श्वरस्तु सर्वत्र भित्तौ नामभिरीक्ष्यते। 'परमात्मा' ईश्वरो यद्वद् हिन्दुभिः सर्वैर्नामभिः। फिलिस्तीन प्रदेशस्य तथा 'बेथ्लहमेश्वर', 'यरुशलीमेश्वर'श्चापि, तथा 'कलवरीश्वर', 'रोमेश्वर'स्तथा चापि, क्रिश्चनैर्ये समार्चिता —को दोषो यदि मान्येरन् एते,ऽन्ये चापि तादृशाः? एको 'गॉड्' ईश्वरो ह्येव सर्वस्थानेषु पूज्यते। 'अल्ला'-'गॉड्'-'परमात्मा' चान्ये यार्था एव ते त्रय। (२२०)। समुद्रस्यापरे पारे, भारतस्यास्तु पश्चिमे, 'अर्ब'-नाम्ना प्रसिद्धोऽस्ति देशो जनपदो महान्, 'अर्बाणां' अस्ति तत्रैषा 'मक्का' नाम महापुरी, यत्र 'काबेश्वरो' देव 'अल्ला' नाम्ना समर्च्यते, 'हज्रुल् अस्वद्' इति ख्यात ज्योतिर्लिङ्गमपौरुष, इब्राहीमर्षिणा, पूर्वं, 'काबा नामक-मन्दिर निर्माय, स्थापित तत्र, पूजार्थं, लोकभूतये, उल्कापिण्डस्वरूपेणापतद्, अश्ममय, हि तद्, नभस्तस्तु पुराकाले, न नरेण च टङ्कितं, ज्योतिर्लिङ्गमत ख्यातं, अकृत्रिम, अपौरुष। प्रत्यब्दं 'हज' यात्रायै, तत्र गच्छन्ति मुस्लिमा, 'ज़िल्हिज्ज' नाम्नि मासे तु, शतशश्च सहस्रशः, पृथिव्याः सर्वभागेभ्यो, यत्र यत्र वसन्ति ते, नराऽधिका च, सरणा, मक्कानिकटमागता, वसित्वाऽसीविते वस्त्रे, त्यक्त्वा उष्णीष पदत्राणान्, पद्भ्यामेव च गच्छन्त द्विजकोशान्, ततस्तु ते, काबामन्दिरमासाद्य, विशाल अस्य प्राङ्गणं महत्, प्रक्षाल्य 'ज़म् ज़मे' कुण्डे, कुर्वन्ति च परिक्रमां, काबानामगृहस्यैते, प्रणमन्ति च दृश्यत्; प्रविश्य तद्गृह पश्चात्, चुम्बन्ति अश्मानं 'अस्वदम्', ध्यायन्ति परमात्मान क्षमाय 'अल्ला'-अभिध तत। (२२०)। हिन्दूनामिव सा पूजा, किन्तु द्रव्यैर्विना हि सा, न पुष्प धूप-नैवेद्य जल मिष्टान्न करम्भा, न अक्षतानि, न पत्राणि, रङ्गोली न लेपन, न ताम्र रौप्य स्वर्णाना आह्वान देवलैरपि, न भिक्षु भक्तोरा-सवाधो, न समर्दं परस्परम्। 'मक्का' प्राप्ये स्थितो धर्मं, 'इब्राहीमे'ति च स्मृत, मान्य प्रजापतिर् धर्मत्रयस्यापि अनुयायिनां, यहूदानां, क्रिश्चनानां, मुस्लिमानां तथैव च, चतुर्वर्षसहस्राणि तस्य कालाद् गतानि हि, तस्याऽन्ववाये च महापुरुषोऽभून् मुहम्मद, ईसाकालात् शताब्दे तु षष्ठे गच्छति

पूर्णता, मुस्लिमाना प्रधानपि विशेषण मुहम्मद , सम्प्रदायास्तु सर्वेऽपि तेषा, त पूजयति हि, 'क़ुरान'–नामक तेषा प्रधान धर्म पुस्तक , मुहम्मदेन 'दृष्टा 'ते मन्त्रा- स्तत्र स्थितास्तु ये । ईसा तथा क्रिश्चनाना प्रधानर्षिश्च, पुस्तक, 'न्यू टेस्टामेंट', यद् भाषा सहस्रेऽपि अस्ति अनूदित , कोण कोण पृथिव्याश्च, जाति जाति च मानधीं, ख्रीस्तार्यधर्मोह्मणैस्तत्र प्रापित लोक-सवकै । ( २४० )। सर्वेषामेव धर्माणां ऋषय पुस्तकानि च, तीर्थस्थानानि चैवापि पवित्राणि, भवति हि , प्रत्येक-सम्प्रदायस्य, यथा सन्ति च हिन्दुषु—अद्वैतिना शाङ्कराणा, विशिष्टाद्वैतिनामपि तथा रामानुजीयाना, माध्वाना द्वैतिनामपि, निम्बार्क प्रभुचैतन्य वल्लभ अघनु यायिना । किंतु समाइको धर्मे सर्वेषामपि मानव ', अनन्ताश्चापि वै वेदा ' सर्वं ग्रन्थ पथायका , सर्वेऽपि धर्मग्रन्थास्ते "वेद एव हि सर्वंश " । "देशधर्मान् , जातिधमान् , कुलधर्मांश्च शाश्वतान्, पाखण्डगणधर्मांश्च, शास्त्रेऽस्मिन्नुक्तवान्मनु ' ( म० ) । मूल न लभ्य आद्य तु सर्वं प्रवचन मनो , लभ्ये ग्रन्थे स्मृते, सर्वे उक्ता धर्मा न सन्ति ते । भृगुणा संस्कृता चेव लभ्यमाना मनुस्मृति —इति तु स्पष्टमेवोक्त तस्यामेव पुन पुन , "एतद्वोऽय भृगु शास्त्र श्रावयिष्यत्यशेषत , एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिल मुनि , ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगु , तानब्रवीद् ऋषीन् सर्वान् , प्रीतात्मा, श्रूयतामिति , × ( २५० ), स तानुवाच धर्मात्मा महर्षीन् मानवो भृगु , श्रूयता येन दोषेण मृत्युर्विप्रान् जिघांसति , अनभ्यासेन वेदानां, आचारस्य च वर्जनात् , प्रमादाद्, अन्नदोषाच्च, मृत्युर्विप्रान् निघांसति" ( म० ) , ( प्रमादो, मदनो, मद्य, उन्मादो, मादकं, मद , प्रमाद भेदा सर्वे ते, "सुख मोहनमात्मन निद्रालस्यप्रमादोत्थं, तत्ताम समुदाहृत –गी० ) , "इ येव मानव शास्त्र भृगुप्रोक्त पठन् द्विज , भवत्या चारवान् नित्य, यथेष्टा प्राप्नुयाद् गति" (म०) । प्रसंगप्राप्तमेतच्च अवधार्यं सुधि चारकै—क्षत्रियश्च आदिराजश्च पत्ति स्वायम्भुवो मनु , ' पतीन् प्रजानां असृजं महर्षीन् आदितो दृशा" ; तथोक्त पुनरेवात्र यथाऽय ' मानवो भृगु ' , क्षत्रियस्य मनो पुत्रा ब्राह्मणास्तु महर्षय ; एतेन स्पष्टमेवोक्त प्राक्काले किल भारते, वर्णता कर्मणैवऽऽसीत् ; न कथंचन जन्मना । भारतीयान् भृगुद्वारा यथा मनुरशिक्षयत्, तथाऽन्या स्वप्रजाभूता जाती अन्यैं अशिक्षयत् , शिक्षयिष्यति चैवापि यथा योग्य पुन पुन , स्वसृष्टैश्च विसृष्टैश्च पुत्रभूतैर्महर्षिभि , ऋषिभिश्च तथैवान्यैर्वि

विधैरधिकारिभिः। (२६०)। सर्वदेशे चतुर्वर्णाः, सर्वदेशे च 'मानवाः'; ह्लिप्याता च सर्वेषां वत्सलो भगवान् मनुः। बृहत्त्वाद् बृंहणाद् 'ब्रह्मा'; मननात् 'मनु' रुच्यते; महत्तत्त्वे मनोऽशो यः, स यस्मिन् संभृतोऽधिकं, सर्वदर्शी, महायोगसिद्धिभिश्चापि संयुतः, संयुक्तैश्च तथा सर्वैर् महापुरुषलक्षणैः, विशिष्टोत्कृष्टजीवोऽयं 'मनु' रित्यभिधीयते, प्रवर्तकोऽयं वंशस्य मानवानां, प्रजापतिः; "वात्सल्ये मनुपत्न्यां"—पुराणेषूपमा स्मृता। इतिहासे पदं, चैतद् अधिकारस्य वाचकं; उच्चावचाश्च 'मनवो' बहवस्तत्र वर्णिताः। कस्याः अपि महाजातेः आद्यः आरम्भकस्तु यः, 'मनुः' इत्युच्यते सोऽपि। सर्वेऽप्यस्तु प्रजापतिः, सर्वेषां मानवानां च, मनुः 'स्वायम्भुवो'ऽभवत्। सप्तमः तु आर्यजातीनां मनुर् 'वैवस्वतो' ऽस्ति वै; "सावर्णिः सूर्यतनयो, ऽसौ मनुः कथ्यतेऽष्टमः" (दु० सप्त०); अवान्तराश्च 'मनवः' सन्ति प्रति 'महामनु'। सुरथश्च समाधिश्च, यौ तौ 'स्वारोचिषे' ऽन्तरे, क्षिप्तौ, विरक्तौ, आपन्नौ, तेपतुस्तपः उत्तमं, तावेव हि पुनर्जातौ, "कलापग्राममास्थितौ", मरुश्च सूर्यवंशीयः, देवापिश्चान्द्रवंशजः; (२७०); महत् तपस् तपन्तौ च, "महायोगबलान्वितौ", काले काले मनुष्येषु चातुर्वर्ण्यव्यवस्थितिं, जीर्णोद्धारं च, कुरुतः, आदेशात्तु महामनोः; सावर्णि-व्यासौ तौ एव भाविनौ अष्टमेऽन्तरे। मनोः सप्तर्षयः सन्ति, प्रत्येकस्य, सभासदः; ज्ञानानां व्यास-कर्ता यः तेषां, व्यासः स कीर्तितः; अन्येषां अन्यकृत्यानि, राष्ट्रे वै मन्त्रिणां यथा। स्वायम्भुवेन मनुनाऽऽदौ धर्मा ये प्रवर्तिताः, अवरैः 'मनुभिः' तेषु क्रियते परिवर्तनं, संकोचः, परिवृद्धिर्वा, देशकालानुसारतः; तत्तद्देशीयऋषिभि'श्च धर्मस्तु व्यवसीयते। एवमेव प्रवृत्तास्तु धर्माश्च, स्मृतयो, बहु; स्वायम्भुव-कृतं किंतु सर्वानुस्यूतमस्ति वै; चातुर्वर्ण्यं, प्रकृत्यैव, सर्वसंग्राहकं, यतः। अनेन विधिना, सर्वे धर्माः, सर्वाश्च जातयः, 'मानवानां' समानेयाः धर्मे नित्ये तु 'मानवे'। यदि न क्रियते त्वेवं, मिथ्या-पार्थक्य-दर्शनाद्, विनाशः एव भविता हिन्दू-धर्मस्य, निश्चितं। 'भेदात्' क्षयः, चयो'ऽभेदात्'; एतत् प्रत्यक्षमेव वै; तथाऽप्यविद्या-प्राबल्याद्, 'भेदः' एव प्रसार्यते। (२८०)। 'अभेद-भावो' वेदान्तैः सौमनस्याय घोषितो यत्र, तत्र 'भेद-भावो' विकरालो विजृम्भते, वेदान्त-घोषं आचार्य, घोरं नर्दति नर्दति, प्रसिष्यत् वृत्रवद्, धर्म, 'इन्द्रो' (राजा, शासको) यदि न रक्षति,'दधीचि-आत्म-वज्रेर्' जातेन अनिवार्येण

द्वेतिना, तपो विद्या-मयेन-पि तेजसा समृतेन च। (२८३, आदित ३८१२श्लोका)।

---

ॐ

## १५ अध्याय

### उच्छृङ्खलवर्तिनां राज्ञां नियन्त्रणं कथ ?

(२२) प्र० "क्षत्रस्याति प्रवृद्धस्य", राज्ञश्चोच्छृङ्खलवर्तिन, "महैव सन्नियन्तृ स्यात्, क्षत्र हि ब्रह्मसंभव" (म०), इति य-मनुना प्रोक्त, अथ तत्सम्भवेद कथ, कथं तु ब्रह्मज क्षत्र, कथ वा तन्नियन्त्रण ?

उ० ज्ञानेनोपदिष्ट शास्त्र, ब्रह्म च विविध तथा, ज्ञानेनैवान्यशास्त्रैर् विद्वत्सुमपि दावयते, ज्ञान ब्रह्म, तथा क्षत्र शस्त्र, इत्यत्र रूपक। ऐतिहासिक एवापि तथाऽर्थोऽन्योऽन्न विद्यते, 'ब्रह्मा'ऽदेशात् प्रजाभिस्तु 'मनुर्' आद्यो वृतो नृप, निदर्शनत्वेन ऐतिह्येन इत्याख्यान तु कीर्त्यते (म० भा०शा० ६६), प्रत्येक-जातौ वृद्धाना श्रद्धेयाना कदम्बक 'ब्रह्म'-इति बहुमान्यत्वाद् वृहत्वाचापि वक्ष्यते, एकोऽथवा वृद्धतम. सर्वमान्य 'पितामह.', तत्प्रदेशान् नरो योग्य राज्ये विनियुज्यते, सर्वैव अस्वअनुयाऽयोग्य राजत्वाद् अपकृष्यते, ज्ञानिनो 'राजकर्तारो' इत क्षत्रोद्भव कारण। अथ च, 'ब्रह्म' तेजो वे, सुसम्भूय, 'महाजन', क्षत्र उत्पथग राज्याद् बलेनैवावरोपयेत्। "स्ववीर्याद् राजवीर्याच्च स्ववीर्यं बल-वत्तर, × सर्वं तु तपसा साध्य, तपो हि दुरतिक्रम"(म०) (१०), यदि वा एकस्य विप्रस्य महर्षे, तपसाऽर्जिता, योगसिद्धा भवेत् शक्ति सादृशी ऐश्वर्यमयी अपि, उच्छृङ्खलवर्तिन भूप शापेनैव स निर्दहेत्। इतिहासपुराणेषु, दग्धना शापवह्निना ऋषिभि शतशो राज्ञा सति उदाहरणानि हि। कृष्णस्यापि समुद्रद् अधिमद् यादव कुल, अतिवीर्यमदोन्मत्त, ऋषिशापेन शोषित। 'ऋषते' 'ऋच्छते' प्राप्या तत्त्वस्य परमात्मन, 'ऋणोतेर' हननात् शापे, 'ऋषि'शब्दो निरुच्यते। "प्रजानां तु नृप स्वामी, राज्ञ स्वामी, पुरोहित" (म० भा०), एवं हि मानवे धर्मे राजा सृष्टोऽभिरक्षिता, ज्ञानी च यन्ता तस्यापि, विधाता, चानुशासिता। "विधाता, शासिता, वक्ता, मैत्रो 'ब्राह्मण' उच्यते", × सज्ज्ञानवान् प्रकृत्यैव "देवानामपि दैवत; प्रमाण चैव लोकस्य, ब्रह्म एव अत्र तु कारणं" (म०), यस्मिन् 'ज्ञान', 'ब्रह्म', 'वेद' भाति, न 'ब्राह्मणो'ऽस्त्यसौ; यस्मिन् क्षत्रनिय

गृत्व नास्ति, न 'ब्राह्मणो'ऽस्त्यसौ । लोकाय प्रमाणत्वे, बल, ज्ञान, हि कारण ।

'हिन्द'-'हिन्दू' शब्दोत्पत्ति

(२४) प्र० सनातनस्य, चअर्यस्य, वैदिकस्यानुयायिन, धर्मस्य मानवस्य, अभिधीयते 'हिन्दव' कथं ? (२०) ग्रन्थेषु तु पुराणेषु शब्दोय न उपलभ्यते ।

उ० इतो नदानां चाना, प्रान्त पञ्चनद स्मृत , तेषां तु पाश्चात्यतम 'सिन्धुर' नाम महानद , वर्षासु अस्ति स विस्तीर्णं महान् 'सिन्धु' समुद्रवत् , 'सैन्धवा ' इति नाम्ना ज्ञातास्तत्तटवासिन , समस्त स प्रदेशश्च 'सिन्धु'-'सिन्ध' इति कीर्तित , तस्यास्ति पश्चिमे, देश , 'पर्शिया' योऽभिधीयते , 'फ़ारस्' इत्यपि स ज्ञात , तद्भाषा चापि 'फारसी', मुस्लिमआक्रमणाद् अथाद्, धर्मस्य परिवर्तनात्, भाषायां च तथैव 'अर्ब' शब्दाना परिमिश्रणात् । 'पारसी कांस्ततो जेतु प्रतस्थे स्थलवर्त्मना" (रघुवंश), इत्येव कालिदासेन तद्देशीयास्तु वर्णिता । द्वौ प्रान्तौ तस्य, 'पर्सिस्' च, 'पार्थिया' चेति, कीर्तितौ, बभूवतु पुरा काले, इत्यैतिह्यस्य कोविदा । 'पार्था ' आसन्, क्षितिपस्य, सुप्रसिद्धा धनुर्धरा , सर्वे ते प्रायतोऽभूवन् सुवाश्व सव्यसाचिन , सम्मुखस्थांश्च, पृष्ठस्थान् चतुर्दिक्षु स्थितानपि, बाणैरविध्यन् शत्रूंस्ते, पटिता रणकर्मणि । सर्वस्य तस्य देशस्य नाम 'आर्याना'ऽपि चाभवत्, परिवर्त्तैश्च भाषाया कालेन 'ईरान्' इति, क्रमात् , 'आर्या ' एव हि ते ऽभूवन् 'आर्याना'-देशवासिन , (३०), आथर्वणस्तु वेदोऽभूद् प्रसीपा, इति केचन , 'ज़िन्द आविस्ता'-इति नाम्ना यत् प्रसिद्धश्चास्ति साम्प्रत । यद्दैऽङ्गिरसा चापि भृगुभिस् तु समुच्चिते, भारताद् भार्गवा केचिद् 'आर्याना' ('इरान') जग्मुरञ्जसा , (इतीदृशा कथा सन्ति, निश्चयस्तत्र दुर्लभः); कंठनिमित्ति भेदाच्च, 'स-कार', तै , 'ह-कार' वद् उच्चार्यते , अत तै शब्दा संस्कृता विकृता बहु , 'सिन्धुर्' 'हिन्धु ', 'सैन्धवा श्च, 'हैन्धवा' इत्यतोऽभवन् , क्रमश , 'हिन्द', 'हिन्दू', च, 'हिन्दुस्थाने ति चैव हि, 'हिन्दी' च, 'हिन्दोस्ताने ति, चाभूत् शब्द परम्परा , 'य्वोनिया' यति नाम 'ग्रीस'-देशस्य यत् पुरा ऽभवत्, तद् 'यवनै'रेव वासितत्वाद् अभूद् इति ; उक्त च मनुना ग्रन्थे यवना क्षत्रजातय ; "शनकैस्तु क्रियालोपाद्, इमा क्षत्रियजातय , वृषलत्व गता लोके, ब्राह्मणादर्शनेन च, पौण्ड्रकाश्चोड्रद्रविडा , काम्बोजा , दरदा , खशा, पारदा , पह्लवा , चीना, किराता , यवना शका " (म०) । ( 'ब्राह्मणादर्शनेन'

इति शब्दार्थोऽन्यत्र वर्णित )। एवमेव 'असुरा'अपि देशे 'आसुरिया'-ऽभिध 'आसीरिये'ति चऽख्यात वासयाचक्रिरे पुरा , 'देवाना' भारतीयाना 'भ्रातृव्या' एव ते ऽभवन् । (४०) प्रसिद्ध हि पुराणे यद्, 'असुर' परनामका दैत्या सर्वैव देवाश्च, भ्रातरो हि विमातृजा । 'द्वद्वानि' देव दैत्याना प्रकृत्या शाश्वतानि च । पुराण'रूपक'स्यास्य बहवोऽर्थो भवति वै, आध्यात्मिक , सर्वथऽधिदैविक , च ऐतिहासिक । 'सिन्धु' देश , 'हिन्द' इति पारसीकैरभ्यधायत , भारतस्य समग्रस्य सा तु जाताऽभिधा क्रमात् , 'ग्रीका'दि 'यवनै ' पश्चाद् 'इंडिया' इत्येव सा कृता , यूरोपीयै तत सर्वैरद्यावधि तथोच्यते । 'हिन्दू' शब्दो न 'धर्मस्य', देशस्यैवास्ति, सूचक , 'हिन्दू' 'हिन्दी'ति वा नाम्ना सर्व भारतवासिन पार-स्यादिभिरुच्यन्ते, 'हिन्दवो', 'मुस्लिमा ' अपि । 'हिन्दू' नाम्ना तु यो धर्म साम्प्रत बुध्यते जनै , तस्य स च नाम रूप 'मानवो धर्म' एव हि, यत स 'मनुना'ऽऽदिष्ट , धर्मवर्णाश्रमात्मक , मानवाना तु सर्वेषा इहामुत्र हिताय वै । हिन्द हिन्दू शब्दयोस्तु प्रयोगे, विविध मत । 'हिन्द देशोद्भव धर्म च क अपि अनुयाति च , स एव हिन्दू नाम्ना स्याद् व्यवहार्यो, न चापर ', एतन्मत तु केषाचित् । चिन्तनीय तदस्ति वै, (५०), 'सनातनस्य' धर्मस्य, 'वैदिकस्य', 'आर्य' रूपिण , 'बौद्धस्य' सद्बुद्धिमत , 'मानवस्य' विशेषत , सामान्यतो मनुष्याणा सर्वेषा च प्रधानत , भूखण्डैकपरिच्छित्ति .किं स्याल्लोकोपकारिणी ? मन्वाशयानुकूला वा ? किं वा स्याद् बुद्धिसगता ? "प्रकृति पार्वती माता, पिता च पुरुष शिव , भ्रातरो मनुजा सर्व, स्वदेशो भुवनत्रय "—इत्युदारमतीना तु प्राच् मुनीना हि समत , अर्वाचीनैश्च तथैवोक्त विशालहृदयैर् मुदा—"अय निज परो वेति गणना लघुचेतसा, उदारहृदयाना तु वसुधा एव कुटुम्बक" । 'हिन्द'-देशोद्भवा धर्मा के,इत्यत्रापि सशय ; 'हिन्द'देशस्य सीमान च , सदिग्धमिद् तथा, विशेषणोत्तरे, वारवार ते पर्यवर्सयन् , बौद्धकाले तथैवासीत् स्मृत, सर्वासु दिक्षु अपि, पारे चापि समुद्रस्य,यद् बृहत्तरभारत, प्राचीनस्य अस्य देशस्य नाम 'भारत' उच्यते , उत्तरीयो महान् भागोऽस्य 'आर्यावर्त ' उदीर्यते, "उत्तर यत् समुद्रस्य, हिमाद्रेश्चैव दक्षिण, वर्ष तद् भारत नाम, भारती यत्र सतति " (भा०), (६०), भाषा तथाऽस्य वर्षस्य, सस्कृता, सुपरिष्कृता, यद्धर्मगर्भ एकै-कशब्दो यस्यास्तु, 'भारती' । "दक्षिणापरतो ह्यस्य ( दक्षिणतश्च, अपरातत

पश्चिमतश्च ), पूर्वेण च महोदधिः, हिमवानुत्तरेणास्य, कार्मुकस्य यथा गुणः, तदेतद् भारतं वर्षं, सर्वबीजं, द्विजोत्तम !" ( मार्क०पु० ); "गंगे च, यमुने चैव, गोदावरि, सरस्वति, नर्मदे, सिन्धु, कावेरि, जलेऽस्मिन् सन्निधिं कुरु"; "इमाः आपः शिवतमाः, इमाः राष्ट्रस्य भेषजीः, इमाः राष्ट्रस्य वर्धनीः, इमाः राष्ट्रभृतो-ऽमाः"(वे०);पुण्यकर्मसु एवं अत्र अवाह्यते समस्तिन्धवः,इमं देशं चतुर्दिक्षु पोषयंति हि याः सदा ; ( अन्याश्च सरिताः वेदे पठ्यंते यत्र तत्र तु )। "माहेन्द्रो, मलयः, सह्यः, शुक्तिमान्, ऋक्षवान् अपि, विन्ध्यश्च, पारियात्रश्च, सप्तात्र कुलपर्वताः", (मत्स्य०अ०९५); (अन्यनामानि चाप्यन्ये पठन्ति अत्र तु केचन )। "अयोध्या, मथुरा, माया, काशी, कांची, अवन्तिका, पुरी द्वारावती चैव, सप्तैताः मोक्षदाः" । एवं पुराणेतिहासे देशस्यास्य तु वर्णनं, कृतं यद्वै प्रदेशानां, प्रान्तानां चापि, भूरिशः, तीर्थयात्राप्रसंगे, वा वनवासादिवर्णने, अस्माद् देशाद् बहिस्थानां देशानां चापि वर्णनं,(७०),(सीताऽन्वेषे यथा पृथ्वी-परिक्रान्तेस् तु वानरैः),यद् कृतं, तेन सर्वेण सीमा निश्चीयते हि सा, भारतस्य तु, या प्रोक्ता मार्कंडेयपुराणादिभिः ।

बाल-गंगाधरो 'लोकमान्यः' श्री तिलकाभिधः, पूर्वपश्चिमविद्यासु निष्णातो-ऽद्भुतपंडितः, भारतोद्धरणे व्यग्रः, शासकैर्बहुपीडितः, 'हिन्दु'-धर्मस्य सः तु एवं लक्षणं पर्यभाषत—"प्रामाण्यबुद्धिर्वेदेषु, साधनानां अनेकता, उपास्यानां अनि-यमः, एतद् धर्मस्य लक्षणं" । श्रीमान् सावर्करो नाम्ना दामोदर-विनायकः, हिन्दूनां साहसी नेता वीरः स्वाराज्य-पूजकः,तदर्थं यतमानश्च शासकैर् पातितो बहु, विविनक्ति सः हिंदुं तु लक्षणैरीदृशैः, यथा—"आ-सिंधु, सिंधुपर्यन्ता, यस्य भारत-भूमिका पितृभूः पुण्यभूश्चैव, स वै हिन्दुरिति स्मृतः" । एवमिच्छंति विद्वांसः केचित्; चिन्त्यं तु तद् यत । 'वेदे प्रामाण्यबुद्धि'श्चेद् हिन्दुत्वस्य विशेषणं, हिन्दु-त्वं बहुकोटीनां सद्यः एव निहन्यते, ईसा-मुहम्मदादीनां धर्मेषु च नियम्यते । (८०) । श्रुतेर् मंत्रे निपतिते, अकस्माद् अपि तु श्रोत्रयोः, शूद्रस्य कर्णौ पूर्येतां त्रपुणा जतुनाऽथवा—एव वदन्त्याज्ञा 'विप्राणां', 'वेदे प्रामाण्यबुद्धिता' 'सच्छू-द्राणां' अपि कथं ? 'असत् शूद्र'-कथैव का ! 'अस्पृश्य'जातयः सर्वाः हिन्दुत्वात् स्पर्शनिषेधिताः, यावाः एव ; एवमन्येऽपि बहवो गलहस्तिताः । 'निग्रन्थ'जैन-लक्षाणि स्युर् हिन्दुत्वाद् बहिष्कृताः; बौद्धानां कोटयश्चापि, यद्वेदः 'पिटक-ग्रंथ'; सिक्खानां अर्धकोटिश्च तथा स्याद् विमुखीकृता, येषां प्रामाण्यबुद्धिस्तु 'ग्रन्थ-

साद्य'-नामके,ग्रन्थे,संकलितो माम्यैर् 'गुरुभि'र्दशभिस्तु यः । तथा च संति यद्यपि, येऽपि वै ब्राह्मणबुवाः, सर्वांशानां च वेदानां आदरं नैव कुर्वते ; आचरणं तथा यद् अन्यग्रथविद्स्तथा वदति, अशुचिमेवाहो !; स्वयं कृष्णमथैव च, गीतायां कर्मकांडं च वेदप्रोक्तं विगायति । "सामवेदः स्मृतः पैत्र्यः तस्मात् तस्याशुचिर्ध्वनिः" (म०) । बहूनां वेदवाक्यानां अर्थश्चापि न बुध्यते, प्रामाण्यबुद्धिः तेषु स्यात् कथं पूतार्थेषु च; ईदृशानि तु वाक्यानि हठाद् ये स्थापयंति वै, तत्र कस्यापि संतोषो न भवत्येव कश्चन ; पूर्वैव तद्वाक्चापल्यं, यथैव तदन्दर्शितं । (९०) । अतो नूनं व्यवस्थाऽत्र कार्या, या समयोचिता, नेतृभिस्तु समाजस्य विद्वद्भिर् दूरदर्शिभिः । यो वर्णयितुं आत्मानमिच्छेन् 'मानव'-धर्मिणं, वर्णाश्रमव्यवस्थान्तर् वस्तुं यः स्वीकरोति च, यो वा वदति चात्मानं 'हिन्दुं', स्याद् 'हिन्दुर्' एव सः ; यथा हि मनुनाऽऽज्ञप्तं "यश्चात्मानं निवेदयेत्" (म०) । यथैव 'वैष्णवो' हिन्दुः, 'शैवो' हिन्दुर्यथैव च ; तथैव 'जैनो' हिन्दुश्च, 'सिक्खो' हिन्दुस्तथैव च, 'बौद्ध'श्च सर्वथा हिन्दुः, 'क्रिस्चनो' 'मुस्लिमो' पि च ; हिन्दूनां एव भेदास्ते सर्वे 'हिन्द'निवासिनः । शूद्रस्य मंत्रश्रवणे त्रपुणा जतुनाऽथवा कर्णयोः पूरणस्याज्ञि स्वार्थो ह्यन्यदेव वै ; चौर्येण, स्पशायद्, वस्तु गोप्यं मंत्रं, कथचन, दुष्टभावेन, हरति, महाधीयेयतां यथा शस्त्रास्त्राणां तु, शत्रुभ्यो दातुं, लोकक्षयाय हि, दुष्प्रयोगाय—सोऽत्र तु दंड्यो भवति सर्वथा । प्रत्यक्षमेव ननु एतद् अद्यापि खलु दृश्यते ; सर्वदेशेषु, राष्ट्रेषु, विपक्षस्य स्पशाः सदा युद्धकाले निगृह्यन्ते, वध्यन्ते चापि निर्दयं, विदेशीयाः, स्वदेशीयाः, भवेयुस् ते, स्त्रियोऽपि वा ।(१००)। नवीना सुव्यवस्था चेन् न क्रियेत ईदृशी तदा, न जैनाः, नापि बौद्धाः वा, न सिक्खाः, नान्यपथिनः, लिंगायताः, तांत्रिका वा, भविष्यंति तु हिन्दवः, न चापि अस्पृश्यजातीनां कोटयः । यैस्तु न श्रुतं, वेदस्य जातु नामापि, कुतः प्रामाण्यबुद्धिता, तेषां, अस्मिन् भवेद् ? किंतु ग्रथ्यास्ते चापि हिन्दवः । चातुर्वर्ण्यव्यवस्थानं यत्र यत्रैव वर्तते, आर्यावर्तस्तु तत्रास्ति यत्रार्याः निवसंति च ; यत्र नैतद् व्यवस्थानं म्लेच्छावासः स एव हि, भारतस्य भवेद् भागः सो, ऽन्यदेशस्य चैव वा ; "कृण्वंतो विश्वमार्यं" चेति आदेशो विश्रुतः श्रुतेः, संकोचितेऽर्थे तु, कथं चरितार्थो भविष्यति ? यस्य भारतभूर् एव पितृभूः पुण्यभूरपि, स कथं पृथिवीमन्यां, समग्रां अर्हयिष्यति ? कथं च पठितुं श्लोकं धृहन्नावं [illegible] शक्ष्यति—"समुद्रवसने, मातः !, पर्वतस्तनमंडिते, विष्णुपत्नि !, नमस्तुभ्यं,

पादस्पर्शं क्षमस्व मे" ? इत्यथा विमुचन् प्रातः स्मरन् 'हिन्दु' एव तु वन्दते। "सर्वंसहा, क्षमामूर्तिः, क्षमा, धरित्री वसुन्धरा, विश्वम्भरा, रसमयी, रसा, सर्वस्य पोषिणी— उदारचरितानां तु 'वसुधा' एव कुटुम्बकं'। (११०)। वेदप्रामाण्यबुद्धौ वा लोके मान्यस्य चाऽऽग्रहः कस्माद्, यदा स वेदांस्तु, पौरुषेयान् हि मन्यते, उत्तरध्रुवभागे च, पृथिव्याः, सहितान् अपि ? वेदान् अपौरुषेयांस्तु पुरुषो यो न मन्यते, तस्य नूनमयुक्तः स्याद्, वेदप्रामाण्ये आग्रहः। 'वेदश्च किं' इति प्रश्नस्योत्तरं कथितं पुरा, स्वयं व्यासेन, भीष्मस्य वदनात्, शान्तिपर्वणि, अन्येऽपि स्मिन्नत्र सकलं पूर्वमेवास्ति उदाहृतं, 'सत्यज्ञानं अखिलं वेदः', निष्कर्षो हि अवसीयते। गृह्यते चापि अथर्ववेद्, वेदप्रामाण्यबुद्धिस्ता, लक्षणं सर्वहिन्दूनां सदा भवितुमर्हति; 'उपास्यानां अनियमः, साधनानामनेकता', द्वे चापि लक्षणे हीमे निर्दोषे भवतस्तदा, तथाप्युपास्यं परमं परमात्मा इति यत्स्मृतं, उपास्यानां उपास्यं यत्, तत्तु सार्वत्र्यमेव हि। "पितृभू पुण्यभू" शब्दौ व्याख्यायेतेऽपि विस्तराद् यदि, तौ च घटेतां, तद् (तर्हि, तदा), हिन्दुत्वस्य तु लक्षणे, सर्वेषां हि मनुष्याणां मनुर्ब्रह्माऽऽदिमः पिता', पुण्यं च कर्तुं सर्वत्र शक्यते सात्त्विकाऽऽत्मना, भुवो वै सर्वदेशेषु, भारतं चापि भूगतम्। एवं सर्वं समाधेयं प्राक्तनं नूतनं मतम्। (१२०)।

रूपकाणां व्याख्यानं।

(२५) प्र० 'रूपकाणि' पुराणानां उद्दिष्टानि पुनः पुनः, केषाञ्चिदत्र व्याख्यानं कस्मान्न क्रियतेऽधुना ?

उ० ग्रन्थेष्वन्येषु हिन्दी भारत भाषाभ्यां निर्मितेषु तु व्याख्यानं चलितं, पूर्वं अस्माभिस्तु तत्कृतं, केषाञ्चिद्, अन्येषां चाऽत्र यथामति उपकल्प्यते, निश्चयेन तु केनापि वक्तुं तथाऽपि शक्यते आभाणकः प्रसिद्धोऽयं, 'वेदा वै कामधेनवः', तथैव च पुराणानि, 'यो यदिच्छति तस्य तद्' तेभ्यः प्राप्यं अतो ह्यत्र, यथामति विचार्यं च ज्ञानविज्ञानसम्पन्नं, युक्तियुक्तं तथैव च, उपयोगेनमेवार्थं उपासिष्यामहे वयम्। (१) 'समुद्रो वरुण आकाशौ' वेदे पर्यायवाचकाः, आश्चर्याणां समप्राणां आकाशो 'ऽद्भुतसागरः', "भद्भ्राणि वरुणस्य व्रतानि" (वे०), "समुद्र इव दुर्बोधो, × गुप्तार्थो वरुणो यथा" (भा०); शून्यं, सर्वार्थसम्पूर्णो, ऽव्यक्तो व्यक्तनिधिस्तथा, खं, महत्, अण्डैः असंख्येयैर् आचितं चित्रितैर्भुविभिः, सूर्यं, चन्द्रैः, धरित्रीभिः, ग्रह नक्षत्र तारकैः, विविधाभिर् विभिन्नाभिः सृष्टिभिः पूरितैरपि,

जगत्सु, असंख्या अणव , प्रपञ्चे च जगन्ति, अपि (श्वे० चा०)। मूलप्रकृतिरेव अस्य 'शेषो', य शिष्यते सदा, (१०), नाम्ना परमास्ति 'अनन्तो ऽसौ,प्रलयेषु महात्स्वपि, सर्वा यस्मिन् प्रधीयन्ते विकृति व्यनयो क्पथक्, 'प्रधान' तत् ; समुद्रेऽस्मिन् प्लुयते व्यापक सद्', फणाऽप्यसहस्रैश्च सर्पवत् सर्पतीति च , स देव च जगत्सर्व तस्योपरि अवलम्बित , फणे फणे च ब्रह्माण्ड , भ्रमण, न्ने विसर्पण , देवपथो( मिल्की वे', स्वर्गंगा)महाअभोगो , असंख्यतारागणा फणा , 'विष्णु'-र्विसि-चनाद्, 'ब्रह्मा' वृहणात्', 'शयनात्' शिव , शेते सर्वशरीरेषु गुहोऽव्यक्त सनातन , बृहयन् जगता प्रात, विसिन्वंश्च परस्पर , महत्तत्त्वस्य रूपाणि, प्रयोऽशाश्च गुणात्मक , विष्णु ' शेते तु 'शेषे अस्मिन् विश्व रचयन् 'बृहयन्' । 'विष्णो ' 'सूत्रात्मनो' 'नाभे ' 'नालानि' च समन्तत प्रसृतानि , यथा विद्युत् नाड्यो देहे तु मानवे, सम्प्रदाये यथा सौरे विलताश्चार्करश्मय , तथैव 'विष्णो ' 'सूत्राणि विद्युत् प्राण मयानि च,ब्रह्माण्डान्यपि अनन्तानि, विश्वानि च, जगन्ति च, एकीकृत्य अपि अनेकानि, सम्यग बध्वा परस्परं, 'धारयति',प्रसृत्याश्च 'धर्मै ' व्यवारयति च (२०) । अण्डान्येव हि 'पद्मानि , यथोक्त शान्तिपर्वणि—"मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता, तस्यासन विधानार्थ पृथिवी पद्ममुच्यते' (म० भा० शा० अ०१८०)। आदिदैत्यौ तु यत्र,तत्र, विख्यातौ "मधु कैटभौ, विष्णुकर्णमलोद्भूतौ, ब्रह्माण हन्तुमुद्यतौ" (दुर्गा०)—श्रोत्रस्य तत्त्वमाकाश, मल अस्य राजसम , "तामसस्तु मधुर्जात कैटभश्चापि राजस " (शां०अ०३५७), कामाधिको मधुर्ज्ञेय , क्रोधभूपाश्च कैटभ , तौ 'ब्रह्माण' च, 'वेद' च, सर्वदा हन्तुमिच्छत , 'विष्णु', सत्त्वमय ज्ञान, सदा तौ च नियच्छति । "मधु कैटभौ, दुरात्मानौ" विधि भत्तु भधावता , "समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरि , पंचवर्षसहस्राणि बाहु प्रहरणो विभु , तावप्यतिबलोन्मत्तौ महामाया विमोहितौ, उक्तवन्तौ 'वरोऽस्मत्तो ब्रियतां', इति केशव , 'भवेतां अद्य मे तुष्टौ मम वध्यौ उभौ अपि' , वचिताभ्या इति तदा, सर्व आपोमय जगद् विलोक्य, ताभ्या गदितो भगवान् कमलेक्षण , 'आवां जहि न यत्र उर्वी सलिलेन परिप्लुता', 'तथा', इत्युक्त्वा, भगवता शंखचक्र गदाभृता,कृत्वा, चक्रेण वै छिन्ने, जघने, शिरसी तयो "(दु०)। (२०)। स्वाधिकार चरित्रा एव बहून् वर्षान्,विजेयता,ज्ञानेन,कामक्रोधौ तु याति, आख्यानआशयो ह्यय । "'ऋणानि त्रीणि अपाकृत्य, मनो मोक्षे निवेशयेत्" ( म० )। ब्रह्मपर्यंस्य ■ क्षेत्रं

जघन द्वेष मुल्यत , तस्मात्स्नानेन दमन, ब्रह्मचर्यबलेन हि, अविप्लुतेन च,'अनार्द्रै' तत्रैव क्रियते तयो । आन्तरौ च रिपू, कामक्रोधौ, धातुविनिर्मिते शस्त्राद्यैर्न विजीयेते , आन्तराभ्यां ततस्तु तौ सद्विचार विवेकाभ्यां बाहुभ्यां एव धारितौ, प्राप्ते युगोचिते काले, काल 'चक्रेण' निश्चिते, 'शिरसी' च तयोश्छिन्ने तेन,'चक्रेण', विष्णुना । शिरो हि मूलस्थान स्याद् वेगानां, काम क्रोधयो वेगे हते, शरीराङ्ग भन्यत् खलु अवशिष्यता , न आत्यन्तिको विनाशो हि, सार्विको वा, भवेत् तयो , तन्जयोस्तु मायाया , अथ किं, तत्स्वरूपिणो । "आपो नारा इति प्रोक्ता , आपो वै नरसूनव " (म०), अपां अभावे, शुष्के तु, कामक्रोधौ न जीवत , तस्मा- सान्त्या उच्यते यद् 'अनार्द्रे नौ हनिष्यसि' । "विष्णु कर्ण मलोद्भूतौ" आदिदैत्यौ हि तौ कुत ? ( ७० ) । श्रोत्रस्य विषय शब्द , आकाशस्य गुणश्च स , आका- शश्चादिम भूत मत्पक्षोपाधिर् आत्मन , उपाधिमलरूपे हि ते रजस्तमसी स्मृते, कामक्रोधौ, ययोरेव रूपौ तु मधुकैटभौ । उपाधेस्तु प्रसादांशो, सत्त्वम प्रतियोगि यत् , तस्य, तत्तु बुद्धिशक्ति ,बाहुद्वय निरूपिता, पक्षं च प्रतिपक्ष चापेक्ष्य निर्णय कारिणी । (२) "देवासुरा प्रकृतय मानसा या शुभाशुभा ; दीव्यतेर् ,द्योतना र्थस्य,'देवा ' इन्द्रियशक्तय , ज्ञानेनोद्भासिता यास्तु, विपरीता तमोमया ,विषयव् वैशद्यविवेकेन रमणाद् 'असुरास् तु ता ,('असून् शान्ति','रमन्त च,असुषु, अस्माद् असुरा स्मृता ')। सर्वेषु प्राणिदेहेषु शाश्वतोऽस्य प्रवर्तते 'देवासुरो' हि सग्राम — इत्यभिप्राय बोधने, रूपेणआख्यायिकायास्तु, यथा श्रुपनिषच्छ्रुति" (छा०उ०,शा० भा०,१ २ १)। भरस्याश्च अप्रमेयाश्च इच्छीभूताश्च शक्तय , सच्चिदानन्दरूपस्य परस्य परमात्मन , विरुद्धगतय सर्वा , सदसद्भ्रमकारिका , विरोधेन विकर्षन्ति 'वासु' प्राण इतस्तत , शरीरं 'मन्दर' गिरि , प्रति 'ब्रह्मांड' एव च समुद्रमंथन एतद् सदैवास्ति प्रवर्तित सर्वत्रापि च ससारे, प्रत्येके हृदये तथा । (५०)। 'वासुके ',देव दैत्यैश्च, पर्यायेण विकर्षणाद्, उत्पद्यते 'अग्नि'घोरा, सद्यपोत् सर्वजीवने, क्रोधात्मक कराल ■ विषं, दाहि,'हलाहल'; 'शिवै'र्वृद्धै: अपीतेऽस्मिन्, धीरैर्या, मन्थने पुन , जीवनस्योपयोगीनि 'रत्नानि' आविर्भवन्ति वै; तेषामर्थे पुन स्पर्धा पक्षपोह, युद्ध- मेव च, सार्वत्रिकं, सार्वदिकं, पुनर्जीवन चित्रण । वृद्धा कुटुम्ब सद्गु०ध, स्वदाऽत्या शमयति हि ।(३)'राहो ' आख्यायिका स्पष्ट 'ग्रहण'स्यैव रूपक । सूर्याचन्द्रमसोर्मध्ये भू पृथ्वी यदाऽऽव्रजेत् , तस्याश्छाया तदा चन्द्र आच्छादयति च भशत , पूर्णतो॰

श्चापि सूच्यते , 'सोमो', 'अमृत', 'देव वारि', चन्द्रश्चापि 'सुधा' कर , पुत्रा सन्तो दितेरेव, मरुतस्तु इन्द्रसैनिका , 'मघवा'द्या , वहन्त्येते 'पर्जन्या'दि बलाहकान् । "ऐरमदीय हि सर" स्वर्ग्यं, छान्दोग्य सूचित , नाम इन्द्रधनुष श्चापि, 'मेघज्योतिर् इरमद" (८०) । 'विश्व रूपस्य' विज्ञान उभयोर् उपकारक, 'देवानां' 'असुराणा' च, ज्ञान, 'ब्रह्म' एव चासित , अतो हत्याऽस्य भवति हि उभयोर्भयकारिणी , इन्द्रात्मविश्वरक्षार्थं ततस्ता व्यभजद् हरि "भूमिस्तुरीय जग्राह, खात पूर वरेण वै, ईरिणं ब्रह्महत्याया रूप भूमौ प्रदृश्यते , तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमा , तेषा नियासरूपेण ब्रह्महत्या प्रदृश्यते , शश्वत्कामवरेण अह तुरीय जगृहु स्त्रिय , रजोरूपेण तासु अहो मासि मासि प्रदृश्यते , द्रव्य भूयोवरेणाऽप तुरीय जगृहुर्मख, तासु बुद्बुदफेनाभ्या दृष्ट तद् हरिकिल्बिष । हतपुत्रस्तत- त्वष्टा ( विश्वरूपस्य च पिता, विश्वकर्मेतिनामा च ) जुहावेन्द्राय शत्रवे, अथान्वाहार्यपचनाद् उत्थितो घोरदर्शन , कृतान्त इव लोकाना युगान्त समये यथा"(भा०)। त चापीन्द्रोऽवधीद्,दध्यङ् ऋषेर्‌अस्थिमयेन च वज्रेण । केऽप्युक्तेन, सारोऽस्थनो य , स एव हि मज्जिन आहितश्च, ज्योतिष्कृत् ('फास्फोरस'–त्रात सूचित ? ) । अन्यत्रापि दृश्यतेऽनेन, श्वेतावां घनता गता मनुष्याणा तु देहा , ये भूमवद् हि अमवन् कृते । (९०) । 'वर्षणाद्','वृश्चनाद्',एव ,'वर्तनाद्' 'वरणाद्' अपि , आकाशमावृणोत्ये'व , वाष्पभूत , भुव स्तृणन् , "येनाऽऽवृता इमे लोका तमसा त्वाष्ट्रमूर्तिना, कृष्णाऽधरा हतु भूमौ, दै येन, दिवि चोत्तरा", शक्र ऐरावताऽरूढ तासा एवं तु 'वृश्चति', 'विवर्त'मान आकाशे, 'दीप्यन्त' 'वृणत' तथा, 'वृकृणो' विद्युन्मयेवाव वज्रेण तु, पुन पुन , घोर नदन् पतत्युर्व्यां, वर्षन्, भिरालितो, जल । वृष् धातु सेचने, हिंसा क्लेशयो , शक्ति प्रबने, तथा प्रजन सामर्थ्ये । सर्वं वर्षेऽनुभूयते, खात पूर्तिश्च, भेदश्चापि ईरिणे उर्वरयोस्तथा , शाखाछेद विरोहश्च, निर्यासा विविधा अपि , जलानां द्रव्यभूयस्त्वं, आधिक्यं च फेनिल , नारीणा आर्तवं, कामो नित्यं स्त्रीपुंसयोस्तथा । अमैथुना कृते सृष्टि , मानसी केवलेच्छया , स्त्री पु भेदस्तदा नासीत्, निर्लिङ्गा हि शरीरिण ; न चाप्येतादृशा वृक्षा ,न मेघा ,न च वर्षणं, अन्यथैव तथाऽऽहार ,तृप्तिश्चापि दिने दिने । ब्रह्महत्याविभजनाद् 'ब्रह्म', ज्ञान, विवर्तते, अवस्थाना परावृत्त्या विज्ञानानि नवानि हि, उत्पद्यते ऽथ गार्हस्थ्य-कृषि आदि विपणानि हि । वृत्राख्यानेन रूप्यन्ते ,

वार्त्ताः भूयस्यः ईरिताः। (१००)। मिताः शब्दाः महर्षीणां अमिताश्चार्थाः भवन्ति हि;
अर्थानां शब्दबाहुल्यं, अर्थस्यावरणमेव वै। (५) गुरुपत्नी, ताराजारः स्वय-
म्भावात् पुरा, अभवत् संकुल-भ्रमणं भूरि ज्योतिषां, च यद्रमे; मिश्रणं दुर्दिनेऽनानां
मेघानां इव, धावतां, अन्योऽन्यं मृद्नतां चापि, पारस्परगुरुत्वाकर्षणात्। यथा भूमे-
रिदानीं तु चन्द्रः एकोऽस्त्युपग्रहः, तथा बृहस्पतेः सन्ति नव चन्द्राः उपग्रहाः;
तद्भूयते यत्, प्राक् काले, तेषां अधिकः उपग्रहः, बुधग्रहसमः स्थितः, तेन गगनर्दं भ्रान्त्वा च,
समाप्त्या च तद्दूताऽपि 'बुधो' जातो नवो ग्रहः एवमेव हि शक्यमाप्यं, भूमेर्मदनि कल्पने,
'वराह'-विष्णोः भूमेश्च, जन्म भौम ग्रहस्य वै। (६) पूर्वं 'अपत्य'-शब्दस्य यत्र
निर्वचनं कृतं, तद्वदेव निरुक्तिः स्याद् 'अश्विनौ'-ति पदस्य च; 'नासत्यौ' 'नासिका'-
जातौ, श्वासः प्रश्वास एव च, प्राणापानौ, 'देव'-वर्यौ, 'अश्विन्या'स्तु 'कु-मारकौ',
श्वासानां चापि रोगाणां कुत्सितानां विनाशकौ; (११०); इन्द्रियाणि तु देवाः वै;
''प्राणायामः परं बलं; × ''प्राणायामैर्दहेद्दोषान्, धारणाभिश्च किल्बिषान्, प्रत्या-
हारेण संसर्गान्, ध्यानेनानीश्वरान् गुणान्'' (म०)। सूर्यस्य भार्या 'संज्ञा' च,
तस्या 'छाया' तथैव च; वैवस्वतो मनुः, संज्ञाऽपत्यानि, च यमी-यमौ; छायाया-
श्चापि सावर्णिः, तपती च, शनैश्चरः; संज्ञायाः अश्विनीरूपधारणं च, कुमारयोः
जननं चाश्वरूपात्तु सूर्यात्; सूर्यस्य येन हि रश्मीनां अतितिग्मानां घर्षणं विश्व-
कर्मणा, चक्रे, भ्रमति वेगेन तीव्रेण, प्रतोष्य चाक्षमा, तेजसोऽस्याधिपत्यस्य ह्रासन-
कारणाय हि, यतो सूर्यस्य नामाभूत् नवं अन्यद् 'विकर्तनः'; इतीयं बहु-वृत्तान्ता
चहुर्या विपुला कथा। ( हिन्द्यां ग्रन्थे रहस्यार्थाः पतितास्ते 'प्रयोजने'; अन्ये ग्रन्थे
च विस्तीर्णे लिखिते चाङ्गलभाषया )। (७) ''कश्यपः, पश्यकः, सूर्यः'' (निरुक्तं);
भूः, द्विविध-त्रिविधमथा, सर्वाण्यानि रूपाणि यानि जनानि त्रयोदश भागांशेन
अस्य; तज्जाताः मुख्याः सर्वाश्च 'जातयः', सर्वेषां जीवजन्तूनां भूमेः, याः स्युः
त्रयोदश। (१२०)। (८) विन्ध्यो व्यवर्धत उच्छ्राये, हिमवत्स्पर्धया, तथा यत्
सूर्यस्योपरोधोऽभूद्; देवाः ईयु पितामहं; अगस्त्याय अदिदेश एनान्, विन्ध्यस्या-
ऽयं गुरुर्यतः; देवप्रार्थनया, आगस्त्यः, चिकीर्षुर्मानसहायतां, उत्तरस्यात् स्वधाम्नस्तु
दक्षिणाय चचाल ह; यदा विन्ध्यान्तिकं प्राप्तः, पर्वतः प्रणनाम तं, दण्डवत् पतितो
भूमौ; अगस्त्यस्तु शशास तं, प्रत्यावर्तेऽहं न यावत्, शयानः तावद् आस्स्व वै!
आख्यानस्याक्षरार्थोऽस्य कस्य प्राप्तस्य बोधकः? अगस्त्य-तारकं ह्यासीत् भुव-

स्थाने पुरा युगे; भूमेर् अक्षस्य सरणाद्, अगस्त्यो दक्षिणां दिशं अदृश्यत प्रस्थितवद्, भूकम्पश्च महान् अभूत्, विन्ध्यपर्वत-पातश्च, तथा पूर्वाब्धेश्च शोषणं ; पुनर्जलैर्महासागरसंपूर्तिश्चाभूत् क्रमाद्, इति । पुनः सोऽयं चेद् अक्षोऽयं, अगस्त्यश्चोत्तरं व्रजेत्, पुनर्भवेद् महाकम्पः, जलस्थल-विवर्तनं, विन्ध्यस्य पुनरुत्थानं, हिमाद्रेः 'पतनं' तथा । ज्योतिर्-भूगर्भ-शास्त्रोक्ततथ्यानां तु सहायतः, आख्यानस्यास्य अर्थो हि कथंचिद् अनुमीयते । "यच्चेदं दृश्यते किञ्चित् जगत् स्थावरजंगमं, तत् सर्वं अस्थिरं, ब्रह्मन्, स्वप्नसंगमसंनिभं ; (१३०) ; शुष्कसागरसंकाशो निखातो योऽत्र दृश्यते, स प्रातर् अभ्रसंवीतो नगः संपद्यते, मुने !; यो धनव्यूहविस्तीर्णो विलोडितगगनो महान्, दिनैरेव स याति उर्वीसमतां कूपतां च वा ; यद्दृगं अद्य संवीतं कौशेयघनविलेपनैः, दिगम्बरं तदेव श्वो दूरे विशरिताऽवटे; ✕ ध्रुवस्यापि समुद्राश्च, चोर्यन्ते तारका अपि, ध्रुवोऽप्यध्रुवजीवोऽस्ति, कैवअस्था मादृशे जने ; सोमोऽपि व्योमतां याति, मार्तण्डोऽप्येति खंडतां, धराऽपि याति वैधुर्यं, कैवअस्था मादृशे जने !!" (यो० वा०) । (९) मेरुः पर्वतराजोऽस्ति, भू-मध्ये चापि संस्थितः, देवानां आलयश्चापि ; त्रयस्त्रिंशाश्च देवताः ; महा-ईशश्च उ-मया सार्धं शिखरे रमतेऽस्य च ; गंगा त्रि-पथ-गा चापि शिरसि अस्य विराजते;—योगिनां तु, शरीरस्य मध्ये एतद्धि रूपकं । 'पर्वभि'र्निर्मितो यस्मात् तस्मान्मेरुस्तु 'पर्वतः' ; 'मेरुदंडः', पृष्ठ-वंशः शरीरे मानवे च सः ; तत्र संचारिणी देवी शक्तिरात्मनस्तु 'पार्वती' ; (१४०) 'उ'-कारस्य निषेधेन, मा-इति-'उमा'ऽपि स्मृताऽस्ति सा; चाहिम्याः त्रिविधाः नाम्यः, ज्ञान-इच्छा-कर्मणां अपि; सुषुम्न-नाडीत्रयं तत्र 'त्रिपथं' च 'नदी-त्रयं' एकीभूतं, 'सुर'-सरिद्, 'गंगा' वा 'गमनात्' सदा ; मेरोर् मूर्ध्नि स्थितो देवो ब्रह्मरन्ध्रे महेश्वरः ; अनन्तानां च 'केलीनां' तयोः 'कैलासः' 'आसनं' ; मानस्यः केलयः ताश्च, सरस् तस्मात् 'मानसं' ; 'दीव्यंति', यत्तु क्रीडंति, विषयैरिन्द्रियैरपि, तस्माद् 'देवाः' इति प्रोक्ताः तास्ताः प्रकृतिशक्तयः; अक्षाभिमानिनो देवाः, पंचभूताभिमानिनः, महेश्वरस्य-'आत्मन'स्तु सर्वे ते वशवर्तिनः ; 'इदम्' द्रावयंति, यस्माद् आत्मा 'इदंद'स्तु कथ्यते ; "इदंदं सन्तमात्मानं इन्द्रं आचक्षते बुधाः" (ऐत० उ०); 'देवानां ईश्वरश्च इन्द्रः', इति पौराणिकी प्रथा ; त्रयस्त्रिंशाश्च पर्वाणि, 'गुटिकाः', वलयानि वा, 'मेरौ' भवंति यानि इह, 'देवा'स्तावन्ति तानि च; प्रत्येकगुटिकायाश्च नाड्योऽ-

क्षान् प्रति निर्गता , 'ब्रह्मनाल' सुषुम्नैव , तथा च 'मणिकर्णिका', 'हिमालय'श्च, 'काशी' च, 'कैलासो', 'मानस' सर —एतत्सर्वं मस्तिष्क भागा नान्योऽथवा मता , 'चक्राणि', 'कन्दा ', 'पीठा ' वा, उन्नीय्या योगरीतिभि । (१५०) । "ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवा अधि विश्वे निषेदु , यस्त न वेद किं ऋचा करिष्यति ? य इद् विदुस् तत् त इमे समासते" (वे०) । उदाहृति अर्थमेवात्र कृत व्याख्यानमीदृश , अधिको विस्तरो द्रष्टव्यो हिन्दी ग्रन्थे 'प्रयोगने', स्मर्तव्यमेतच् चैवापि, व्याख्याने नास्ति निश्चिति , तथोक्त पूर्वमेवापि, तर्क ऊहा एव केवल । (१०) एतद्ग्रन्थमूलभूत वैदिक यत्तु रूपक, विशद किल तस्यार्थ , न इयत् तत्रास्ति सशय । "सहस्रशीर्षा पुरुष , सहस्राक्ष , सहस्रपात्" (वे०), मानवाना महाजातेर्वैतत् वर्णन स्फुट । "ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्य कृत , ऊरू तदस्य यद् वैश्य , पद्भ्या शूद्रोऽजायत" (वे०) , ' ब्रह्म वक्त्र, भुजौ क्षत्र, कृत्स्नमूरूदर विश , पादौ यस्याश्रिता शूद्रा , तस्मै वर्णात्मने नम " ( म० भा०, शा०, भीष्मस्तवराज ) । यथा मानवदेहस्य शिरो ज्ञानाङ्गमस्ति वै, तथा समाजदेहस्य ज्ञानि वृन्द भवेच्छिर , बाहू च रक्षि सदोह , पोषि स्तोम सचोदर, पादौ सर्वधरौ चापि निकर श्रमिणामिति । 'पद्भ्यां' इति चतुर्थ्यन्त ऋचाया अस्ति वै पद, 'समाजपादौ भवितु', 'पादत्वाय', इति योजना, अपरैस्तु त्रिभिर्वर्णैर् अत्यापि ननु साम्यत , (१६०), न अपादानार्थक ह्यत्र 'पद्भ्या' इति पद भवेत्, मान्यवर्णाय कस्मैचित् प्रयुक्ता पञ्चमी, यत , ब्रह्मणोऽङ्गेभ्य उत्पत्ति अपादानेन वादिनी । रूपकाणा पुराणाना व्याख्यान क्रियते, यदि, युक्ति युक्त , तदा, तेन जनानां बुद्धिवर्धन, ( नागरार्थेन मूढाना ब्राह्मणानैव पोषण ), भारतीयसमाजे च सज्ज्ञानाना प्रचारण , तथैव मूढग्राहाणा, श्रद्धाऽन्धस्य च, नाशन , स्वावलम्बिरनेनापि, धैर्यस्य, अभ्यसन तथा—सत्य 'स्व राज्य' प्राप्येत अचिरादेव, तदा, स्थिर । (११) कर्मठाना महामान्य प्रामाणिकतम , स्वयं कुमारिलो.महाविद्वान्, स्वग्रन्थे तन्त्रवार्त्तिके, पौराण वैदोपाख्यानान् विगृणोत्येव युक्तिन , नाग्रगृह्णाति तु शब्देषु, बुद्धियुक्तार्थतत्पर । "प्रजानाथं, नाथ !, प्रसभ अभिक स्वां दुहितर गत, रोहिद्भूता रिरमयिषु, ऋष्यस्य वपुषा, धनुष्पाणे , यात दिव अपि, सपत्राकृत अमु त्रसत, तेऽद्यापि त्यजति न मृगव्याधरभस " ( महिम स्तुति )—इत्याख्यानस्य तेन इय व्याख्या तत्र प्रदर्शिता—(१७०)

उद्गच्छतो हि सूर्यस्य या उषा धावति चाग्रतः, प्रातःकालस्य रम्यस्य तस्य एव एतत् तु रूपकं । अपरे ज्योतिषा आहुः—धनूराशेस्तु रूपकं नक्षत्रमृगशीर्षस्य चाप्येतद्, यतः शाश्वतं । अन्ये तु, अन्यप्रकारेण बुध्यतेऽस्य तु रूपकम्—"वाचं दुहितरं तन्वीं, स्वयम्भूर् हरतो मन ", दुष्कार्ये कर्षणाद् वाचं, ब्रह्मणः छिद्यते शिर एवमेतौ,यः पुराऽभूच्च च (प्रकाशतत्त्वेन निर्मितः, च वारि चान्यतत्त्वाना दीपितानि तत परं),'रुद्रेण' तच्छिरश्छिन्नं,वाग्देव्या दुष्प्रयोगतः, विप्रलम्भनजातेन, जनता'क्रोध'रूपिणा, महाजनाग्रणीर्मुख्य शूद्रो रुद्राऽभिधीयते,"यदि कार्यविपत्ति स्यात् मुख्यस्तत्र हन्यते" छिन्न नेतृत्व अस्य, न्येऽधिकारास्तु अपवर्तिता । रूपकाणां पुराणानां,अर्थास्तु बहुरूपका, भवति एव, प्रतिपदं नवीनां कथ्यते कथा । महिम्नस्तवटीकायां,सन्यासी मधुसूदन विद्वान्, "रूपकमेवैतद्", इति स्पष्ट प्रवक्ति च ।(१२) एव कालिय नागस्य शीर्ष्णां उपरि नर्तनं, मर्दनं, दमन चापि, ज्योतिषामेव रूपकं, तत्तद्रूपेण हि व्यूढा, दृश्यते खे तु तारका । (१८०)। "यद् यत् शिरो न नमतेऽस्य शतैकशीर्ष्णस्, तत्तन्ममर्द, खरदण्डधरो, ऽङ्घ्रिपातैः, तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलाऽऽदिगुरुर्ननर्त"(भा०)। आयुर्वेदस्य रूपकं एतत्, नाडीव्यूहस्य रूपकं,यस्योपरि च नर्तिमान जीवो नृत्यति सततं, "शतं चैका च हृदयस्य नाड्यः",तासां मूर्धानं अभिनिःसृता, एका,यया ऊर्ध्वं आयन्, अमृतत्वं एति, विष्वङ् अन्या अभिनिष्क्रमणे भवति"(उ०),ब्रह्मनाडी सुषुम्ना एका,मुक्तिं यच्छति सततं ।(१३)'ऋते ज्ञानात् न मुक्तिः स्यात्', 'मुक्तिः काश्यां मृते'इति, वाक्ये तु अस्ति विभिन्नार्थे,कथमेते समं अनु इत ?काशीखण्डे रहस्य तद् विवृतं [redacted] स्फुटाक्षरैः, आत्मप्रकाशिनी बुद्धिः 'काशी' खलु अभिधीयते, असी च वरणा चापि तत्र इडा पिंगला तथा, गंगा स्वयं त्रिपथगा सुषुम्ना ब्रह्मनाडिका, यया निर्यन् शरीरात्तु जीवो ब्रह्मत्वमाप्नुते, काश्यां प्रज्ञानिनां वासात्,सुलभं आत्मदर्शन-सात्त्विकेन विरक्तेन, (न तु राजस तामसैः),ज्ञानिनामेव सत्प्रसादात्—एवमस्ति समन्वयः, "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"(गी०) । (१४) नृणां समूहो 'नार' स्याद्, 'अयन' चातिमा गतिः, सन्याऽतिगानां 'नाराणां' यद् अस्ति उद् भयन स्थलं, तथा प्रलयन स्थानं, तत् 'नारायण ' उच्यते, जीवात्मानो 'नरा ' प्रोक्ता ,परमात्मा परायणं नारायणो हि सर्वेषां जीवानामिति निश्चितं ; (१९०), "सर्वेषां अवताराणां निधानं बीजं अव्ययं" ( भा० ); सखायौ चाप्यभिन्नौ तौ, नर नारायणौ सदा,

देहवृक्षे परिष्वक्तौ समाने चैव निश्यदा, एकः स्वादूम् तयोरत्ति, परोऽनश्नन् चरास्ति वै ; एको युध्यति शस्त्राग्रे , पर 'सारथिर्' एव हि, रथे समाने आरूढ, 'सरथो', बोधयन्,नयन् । (१५) स्पष्टैरेव,युत , शब्दैर् अर्थाः सर्वेऽपि न प्रदिता , यथाऽद्यकाले पाश्चात्यैर् विज्ञैर् विज्ञानशास्त्रिभि ? प्रीतये बालबुद्धीनां, लाघवाय स्मृतेरपि, स्वल्पै शब्दैस्तथाऽर्थानां बहूनां सूचनाय च, पुराणै ऋषिभि प्राय प्रकारोऽसौ धल्पित । अर्थविस्तारका ग्रन्था , बृहन्तो, बहवोऽपि च, आसन् पूर्वं, पुराणानां भाष्यरूपा० , सुबुद्धिभि जिज्ञासुभि सुचरितै लभ्याश्चापि अधिकारिभि , जिज्ञासूना तु, ते, ह्रासात्, देशे दुर्बुद्धिवर्धनात्, लोपिता , कालवेगेन, विदेशि आक्रमणैस्तथा , निधिर्पं ऋषिभिश्चापि गुप्तस्थानेषु गोपिता , एवं ऊहा च,तर्कश्च,अनुमान च प्रकारांते, परम्पराया उच्छेदान्,निश्चेतु तु न शक्यते । विविधाना तु शास्त्राणा, अनेकाभिश्च दृष्टिभि ,दृष्टेभ्यो रूपकेभ्यस्तु, नानाऽर्थां निस्सरति ये , सभिन्नाश्चापि ते सर्वे, ह्यविरुद्धा , समन्विता , मार्मिका नियमा , परस्मान्, महावाक्यनिरूपिता , प्रकृतेर् अखिलांगेषु, ते एव प्रभवन्ति वै, यान् वै 'समन्ततो' दृष्ट्वा, भवति 'समदर्शिन '। ( २०३, आन्हिक ४०१५ श्लोका )

---



## १५ अध्याय

### स्व राज्य-निरूपण।

(१६) प्र० 'स्वराज्य' शब्दस्तु अति एव देशेऽस्मिन् श्रूयतेऽधुना , कोलाहलो महान् अथा न स्पष्टताऽद् उच्यते , किं तत् ? कथ तत् साध्य ? को भेदोऽस्ति स्व सु-राज्ययो ? 'स्व-राज्यस्य' स्वरूप किं , 'पर राज्यस्य' किं तथा ? धर्माधर्माणा धर्मस्य सम्बन्ध कीदृशास्तयो ? किं 'सम्यग् दर्शन', किं चापि असम्यग्दर्शन' भवेत् ? 'प्रयोग ' सु कु 'दृष्टीना' स्व-राज्य-स्थापने च क ?

उ० 'दर्शन', नयन, नेत्र, नेता, नीतिर् , नयस्तथा, 'दृष्टिर्', मतिर् , मत, प्रज्ञा,बुद्धिर्,धीर् ,धिषणाऽदय , शब्दा ह्येते समानार्था , प्रायशो,(न तु सर्वथा)। यथा 'दृष्टि ', यथा नीति , यथा बुद्धिस्तथा 'मति ', यथा मति , यथा प्रज्ञा, यथा धीश्च तथा 'कृति ' , यथा 'नय स्तथा 'चार ' , तथा 'कार्यं' यथा 'मत' , 'दर्शन'स्यानुसारी एव 'प्रयोग ' सर्वकर्मसु । किं ▪ 'दर्शन' शब्दस्य विशेषार्थोऽपि

तथाधिकार, आज्ञाया शक्ति,तु क्षत्रियोऽर्हति,सचय धनधान्याना प्राप्तु वैश्यस्तथा-
पूव च, साधारणोऽप्य नियम , तत्र एतत्तु विशेषण , शास्त्रकृत्याऽर्जयन् वृत्ति,क्षत्रि-
यश्चापि भक्तो भवन्, विद्यावृद्धो हि अतितरा मवेच्चेद् यस्तु, सोऽप्यवद्, ब्राह्मणे
भ्योऽल्पविशेष्यो, जीवद्भ्यो विप्रवृत्तिभि , क्षत्रियोऽपि यवीयेभ्यो,ऽधिक सम्मान
माप्नुयात । शूद्रोऽपि नवर्ति क्रात्वा, दशम दशक गत , वयसा तु, यवीयोभ्यो,
द्विजेभ्यो मानमर्हति । एव वैश्यद्विजे चापि योजनीय मनोर्वच । ( ६० )। एके
ब्रुवति, श्लोकोऽत्र लापनीयोऽप्ययैव हि—'प्रत्येकवर्णे यथाना गणन तूत्तरोत्तर' ।
न सा व्याख्या समीचीना , स्याच्चेद् एव मनोमंत, कस्मारस्पष्टमसदिग्ध न
ब्रूयाद् भगवान् ? यथा—'प्रत्येकवर्णे यथाना भूयासि गुणवति च' । 'गुणवन्ति'
इति शब्देन 'धर्मतोऽर्जितता' उच्यते । चौर्यवित्त, कुल चाऽसद्, दुष्कर्म निरत
सदा, महद्, यदपि, विख्यात, वृथा वीत वयोऽधिक, महत् कर्मापि, यत् किंतु
कारण लोकरावण, विद्या च कदाऽधर्मेण, दुष्टभावैश्च दूषिता, धर्षिनी त्वभि-
मानस्य, कलहानो च कारिणी, प्रचारिणी च पापानो, भयुवाना च दम्भिनी—
एते गुणा दुर्गुणा वै, मान माहन्ति कथन, निन्दामेव,अवमान च, धर्षण, दडन
तथा, प्रत्युत,अर्हन्ति नित्य ते, राजतश्च, समाजत । "वित्त, बधु , वय , कर्म,
विद्या भवति पचमी, एतानि मानस्थानानि, गरीयो यद् यद् उत्तर", "द्वा सुपर्णा
सयुजा सखाया, समान वृक्ष परिषस्वजाते, तयोरेक पिप्पल स्वादु अत्ति, अन
श्नन् अन्योऽभिचाकशीति । × मनस्तु द्विविध प्रोक्त,शुद्ध चाशुद्धमेव च, × वासना
द्विविधा ज्ञाता, शुभा चैवाशुभा तथा" (उ०) । '(७०) । सर्वै स्वानुभवैनैव
बुध्यते तत् प्रतिक्षण , प्रत्येकहृदये द्वो 'स्वौ', उत्तमश्च, अधमोऽपर । मनो हि,
अशुद्ध, यत् स्वार्थसाधक परपीडया, पापवासनया पूर्ण, तदेव 'स्व अधम '
स्मृत , शुद्ध, यत् स्वार्थहानेन परार्थ तु निषेवते , शुभवासनया पूर्ण, 'उत्तम
स्वो' ऽस्ति सन् मन , साध्नोति यत् शुभान् कामान् परेषो 'साधु'रियत ।
सर्वेऽसमैकत्वधीर्यस्मिन् उदिता मनसि,स्फुटा, अव्यक्ता एवापि अथवा, तद्धि मन
शुद्ध भविष्यति , 'अभेदबुद्धे वृद्धया एव मन शुद्धिर्विवर्धते । समाजस्य ईदृशा
जीवा , 'उत्तम स्व' स्वरूपिण , शुभवासनया पूर्णा , सर्वभूत हिते रता , 'सम्य
ग्दर्शन' सम्पन्ना , सर्वत्र सम दर्शिन , शास्तृकार्ये नियुक्ता चेत् , 'स्व राज्य'
सिद्धमेव हि । मानवी प्रकृति चापि, मानव जीवन तथा , सर्वांगतु न यो वेत्ति,

पुरुषार्थांस्तथैव च, तथा तत्साधनोपायान्, जगतस्तत्त्वमेव च, मर्म संसरणस्यापि, स कथं शासको भवेत् ? सर्वजीवनकार्येषु, मानवानां निदेशकः, मानवव्यवहाराणां कथं वा परिशोधकः ? (८०)। कारणानां च कार्याणां फलानां तु परम्परां, चतुर्दिग्व्यापिनीं चापि, संततां, दूरगामिनीं; न वेत्ति अदूरदर्शित्वात् त्वरया एव ईरितस्तु यः—'ईदृशे नियमे जाते, फलं किं, यस्य कस्य च, सुखं वा यदि वा दुःखं ?'—न चिन्तयति यस्तः, धर्मवक्तृआसनं नासौ अनात्मज्ञोऽर्हति कश्चित्। "गुणवद् अगुणवद् वा कुर्वता कार्यजातं, परिणतिरवधार्या यत्नतः पण्डितेन, अतिरभसकृतानां कर्मणां, आविपत्तेर्, भवति हृदयदाही शल्यतुल्यो विपाकः" (भर्तृ०); "सहसा विदधीत न क्रियां, अविवेकः परमापदां पदं ; वृणते हि विमृश्य कारिणं,गुणलुब्धाः, स्वयमेव सम्पदः" (किरात०)। मनुजानां सर्वधर्मान् वक्तुमुक्तो मनुः, यतः "स एव सर्वस्य विधानस्य स्वयम्भुवः अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित् प्रभु." (म०), सम्यग्दर्शी, सर्वदर्शी, सर्वज्ञानी, दयानिधिः। विधानकार्यतत्त्वं यो न विजानाति मानुषः, कथं धर्मविधानं सः मानुषार्थं करिष्यति ? अनात्मवेदिनां, राग-द्वेष विप्लुत-चेतसां, अहंकाराभिभूतानां, स्वार्थान्धानां च, लोभिनां, (९०), अल्पश्रुतानां, क्षुद्राणां, कामिनां, अल्पदर्शिनां, राज्यं यत् तु, तदेवास्ति 'पर-राज्यं' हि दारुणं। वधुवर्णाः, श्वेतवर्णाः, रक्त-पीत-असिताश्च वा, प्रकृत्या यदि ते दुष्टाः, भवेयुश्चाधिकारिणः, सहोदराश्चेत् स्युः तेऽपि, 'पर-राज्यं' हि तन् ननु। "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि, × समं पश्यन्नात्मयाजी, 'स्वा राज्यं' अधिगच्छति ; सर्वं परवशं दुःखं, सर्वमात्मवशं सुखं, एतद् विद्यात् समासेन लक्षणं सुख-दुःखयोः" (म०); मानवस्य तु देहोऽयं 'स्वार्थी' एव परस्तः 'परः', अशुभाभिर्वासनाभिः पूरितः प्रेरितो यदा ; वस्तुतोऽसौ 'परवशो', 'दुःखी', देहवशस्तु यः। यः पुनर्संशमायातः 'शुद्धस्य मनसः' किल, 'निष्कामस्य', 'दया-मैत्री-मुदिता'दिमयस्य च, 'विद्यां' च दृष्टवान् यस्तु, समीपाद्, दूरतोऽपि वा, सर्वलोकहितेच्छुश्च, स ह्येव 'आत्मवशो' ध्रुवं। ईद्र् 'आत्मवशानां' तु राज्यं 'स्वा-राज्यं' अस्ति वै। "अभयं, सत्त्वसंशुद्धिः, ज्ञानयोगव्यवस्थितिः, दानं, दमश्च, यज्ञश्च, स्वाध्यायः, तपः, आर्जवं, अहिंसा, सत्यं, अक्रोधः, त्यागः, शान्तिर्, अपैशुनं,(१००), तेजः, क्षमा, धृतिः, शौचं, अद्रोहो, नातिमानिता, भवंति संपदं दैवीं अभिजातस्य

सर्वदा" (गी०), ईदृशानां हि यद् राज्यं, 'स्व राज्यं' तु तदेव हि । 'अविद्याया' निमग्ना ये, पशुवदाचरन्ति, कामक्रोधाभिभूता ये, देहेन्द्रियपरायणा, "मोघाशा, मोघकर्माणो, मोघज्ञाना, विचेतस, राक्षसीं आसुरीं चैव प्रकृतिं मोहिनीं श्रिता, × असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरं, अपरस्परसम्भूतं, किमन्यत्, कामहैतुकं, एतां 'दृष्टि'मवष्टभ्य नष्टात्मानोऽल्पबुद्धय, प्रभवन्त्युग्रकर्माण क्षयाय जगतो हि ये, × कामोपभोगपरमा, एतावदिति निश्चिता, आशापाशशतैर्बद्धा, मत्सर ईर्ष्या परायणा, ईहन्ते कामभोगार्थं अन्यायेनार्थसञ्चयान्, 'इदमद्य मया लब्ध, इमं प्राप्स्ये मनोरथ, इदमस्तीदमपि मे भविष्यति पुनर्धन, असौ मया हत शत्रु, हनिष्ये चापरान् अपि, ईश्वरोऽहं, अहं भोगी, सिद्धोऽहं, बलवान्, सुखी, आढ्यो, अभिजनवान् अस्मि, कोऽन्योऽस्ति सदृशो मया', × आत्मसम्भाविता स्तब्धा, धनमानमदान्विता, (११०), यजन्ते 'नामयज्ञै' ये दम्भेनाविधिपूर्वकं, पारुष्य दर्प हिंसाञ्च बल क्रोधाँश्च संश्रिता, 'आत्मान' 'पर' देहेषु प्रद्विषन्तो, ऽभ्यसूयका" (गी०), ईदृशा 'अभिजाता'स्तु जीवा सम्पद आसुरीं । "दम्भो, दर्पो,ऽभिमानश्च, क्रोध, पारुष्य एव च अज्ञान च, अभिजातस्य पार्थ ', सम्पद् आसुरीं" (गी०) । यद् राज्यं ईदृशां तत्, 'पर-राज्य' मप्यहं । 'स्वदेशीया', 'विदेशीया', मुस्लिमा', 'क्रिश्चना'श्च वा, 'शूद्र विट् क्षत्र ब्रह्मा'दि नाम धारक 'हिन्दव', 'धर्मेण' शुक्लवर्णा वा, श्याम गौरभूमिरु गुणा, 'कर्मणा' यदि 'कृष्णा'स्ते, 'वर्ण' हीना, अनार्येशा, 'पर-राज्य' हि तद्राज्य, न स्व राज्य कथञ्चन । एव च, कर्मणा शुक्लो य कश्चिद्, अपि धर्मेण यत्किञ्चिद्वर्णधारक्, यस्मिन् कस्मिन् देशे जातश्च, यदि प्रजाना श्रद्धाया आदरस्य च भाजन 'आत्मीयत्वेन', 'स्व-स्वेन', प्रजाभि 'स्वीकृतो' यदि, 'स्व राज्य' [illegible] 'सु राज्य' च नूनं तस्यैव शासन । शुक्लं, कृष्णं च, मिश्र च, कर्म त्रिविधं उच्यते, कर्माशुक्लाकृष्ण यत्, तत्तु 'निष्कर्म' योगिना (यो० सू० भा०) । मानवस्य 'स्वदेशो' ऽसौ यत्र यत्रास्ति मानव ; अन्यथा, 'जन्मभूमि'स्तु मातृतस्समिता एव भू । (१२०) । "उदारचरितानां तु वसुधा एव कुटुम्बक, अय निज, परो वा, इति गणना लघुचेतसा" (हितो०) । "पृथिवी मे माता, पृथिव्या ऽहं पुत्र" (अथर्ववेद) । 'स्वदेशो', यत्र मित्राण्यपि, 'विदेशो', यत्र नो तथा । 'स्वदेश ऽय, विदेशोऽय—इति भावे तु कारण एतदेव, यद् एकत्र लभ्यते

हि सहायका, वेदिन स्वस्य भाषाया, वेदाद्याचारसमा अपि, मलायो बान्धवा-श्चापि; नान्यत्र द्राक् तथा पुन। ये अहिता, ते 'विदेशीया', स्वदेशीया' तु, ये हिता, स बन्धु य शुभ कुर्यात्; 'मातृभू', या तु वृत्तिदा। "न तेन वृद्धो भवति येनास्य पलित शिर, यो वै युवाऽपि अधीयान, त देवा स्थविर विदु, न हायनै, न पलितै, न वित्तेन, न बन्धुभि, ऋषय चक्रिरे धर्मं, यो ऽनूचान स न महान्" (म०)। 'उत्सवे, व्यसने (आपदो) चैव, दुर्भिक्षे, राष्ट्रविप्लवे, राजद्वारे ('कचहरी'), श्मशाने च, यस् तिष्ठति स बान्धव" (हितो०)। राज्ये, सहोदरस्यापि रावणस्य, भयङ्करे, विभीषणस्य, न्यूना वा, 'पूर्णा' वा, न 'स्वतन्त्रता'। 'डिक्टेटरा'दि राज्येषु साम्प्रत चेदशी दशा, 'पूर्ण स्वतन्त्रता' नून पत्रप्येषु 'विराजते', 'प्रजा सत्रं' तथा शब्दो जिह्वासु परिनृत्यति। (१३०)। 'डिक्टेटरस्य' तु इच्छाया विरुद्ध न मनाग् अपि कोऽपि 'वक्तु' समर्थोऽस्ति, 'कर्तु' इत्यस्य का कथा। नून पाश्चात्यदेशेषु, पूर्वीयेष्वपि केष्वपि, सत्यां आसुर-सम्पत्तौ अपि, सति गुणां बहु, तान् गुणान् अनु-कर्तु च, हिन्दून्, केचन हिन्दव, आदिशन्ति, परन्त्वेते न स्वस्तु 'जन्मवर्णता' इच्छन्ति, न च पश्यन्ति, यत् तेषा नास्ति सम्भव गुणाना, एतया सार्धं, सपत्नरूप विपक्षया। 'कर्म वर्ण'-सयैवैषां गुणानामस्ति संगति। महाभारतकारेण राज्योत्पत्तिकथा यथा वर्णिता, सत् स्व-राज्यस्य लक्षणं सूच्यते तथा। अश्रेयाना समाजस्य वृद्धानामुपदेशत, महापुरुष अग्र्य तु प्रजा राज्याय वव्रिरे, धीरवीराग्रणीर्, योग्यतमो रक्षण-कर्मणि, श्रेष्ठो, वरिष्ठो यश्चाभूत् प्रजापालनकर्मसु; स्वापितायां, पुरा काले, ऋषिभि, पारदृश्वभि, वृद्धै, परिणतप्रज्ञै, मर्यादाया सर्वतस्तथा, वर्णाश्रमव्यव-स्थाया च प्राणे प्रतिपालक। "ब्राह्मं प्राप्तेन संस्कार क्षत्रियेण यथाविधि, सर्व-स्यास्य यथान्याय कर्तव्य परिरक्षण" (म०), (१४०); अर्थाद् यो ब्रह्म चर्येण विद्याभिश्च सुसस्कृत, क्षतात् त्रातुं समर्थश्च, राजा कार्य, स एव हि। वृद्धा ते 'राजकर्तार' श्रूयन्तेऽनेकश. श्रुतौ; प्रजाभिर्वरणे सिद्धे, तेऽभ्यषिचन् नृपं तत, प्रतिज्ञां कारयित्वा च, प्रजानां रक्षणाय वै, प्रजाभि अदितानां च तेषां केचन मंत्रिण अभूवन, अपरेऽमात्या, सुमन्त्रा, सचिवास्तथा दूताश्च, प्राड्विवाकाश्च, प्रधानाश्च, पुरोधस, धर्मान्नामसमाख्याश्च सदस्या अपरेऽभवन्, प्राज्ञाश्च साधवः सर्वे, प्रजाभिश्चादता वृता; महोदये राज्य'यज्ञे', ऋषयो, ऋत्विजो, यथा।

"सैषगचार्य पुरोधा य शापानुग्रहयो क्षम, × यत्कोपभीत्या राजाऽपि धर्म नीतिरतो भवेत्, × न बिभेति नृपो येभ्य ते स्यात् किं राज्यवर्धन ? × राज्य प्रजा, बल, कोष, सुनृपत्व न वर्धित, न अरिनाश कृत, यैस्तै मन्त्रिभि किं प्रयोजन ?" (शुक्र०)। यथा राज्ञो ह्यमात्यास्ते नियन्तारश्च बोधका, तथा तस्य च, तेषां च, सदस्या. धर्मपर्षद, प्रजा प्रतिनिधी भूता, "सर्वभूतहिते रता"। इद रूप समग्र तु 'सु स्व राज्यस्य' चित्रित, पुराणैरितिहासैश्चाप्यऽऽख्यानैर्विविधैरपि। (१५०)। "अग्नि अनु स्वराज्य अग्नि उक्थानि वावृधु, विश्वा अधिश्रियो दधे। अस्य हि स्वयशस्तर, सवितु कच्चन प्रिय, न मिनन्ति स्वराज्य" (ऋ०म०)। 'स्वराज्य, अग्रस्य भर्तार, अजस्त्रै सुपूरितं, अग्निवत् प्रज्वलन्त चानुभाव्य प्रजा सन्ति वै शस्त्राणि उक्थानि वर्धते, दधति अपि अधिका श्रिय, सूर्यस्य यश स्वन्त सर्वेषां सुप्रिय तथा, न मिनन्ति, न हिंसन्ति, तमोरूपास् तु शत्रव'। स्वाधीनास्तु जना सत्ये स्व राज्ये, स्वावलम्बिन, उत्कर्षन्ति नितान्त तु विशिष्टान् स्वान् गुणानिति, परराज्ये पुन सर्वेऽपकृष्यन्ते गुणा, अपि वर्धन्ते च तथा दोषा दासबुद्धिमहोदरा। "वर्णानां आश्रमाणां च राजा सृष्टोऽभिरक्षिता" (म०), नान्यद् राज्ञोऽस्ति कर्तव्य ईदृक्सरक्षणाद् भवे। "परिनिष्ठितकार्यस्तु नृपति परिपालनात्, कुर्यादन्यन्न वा कुर्याद्, ऐन्द्रो राजन्य उच्यते, " परिनिष्ठितकार्यस्तु स्वाध्यायेनैव वै द्विज, कुर्यादन्यन्न वा कुर्यात्, मैत्रो ब्राह्मण उच्यते" (म० भा० शा०), कृतकामस्तथा वैश्यो धन धान्याभिवर्धनात्, कुर्यादन्यन् न वा कुर्यात्, पार्जन्यो (मारुतो, कौबेरो) वैश्य उच्यते, (१६०), परिनिष्ठितकार्यश्च शूद्रोऽप्येषा सुसेवनात्, कुर्यादन्यन्न वा कुर्याद्, गान्धर्व शूद्र उच्यते (पद्मपु०; वायु पु०)। चातुर्वर्ण्ये प्रजा यत्र, जीवने चाश्रमेषु च, सर्वाणि धर्म कर्माणि, कृष्य-तोषणकानि च सुविभक्तानि रक्ष्यते, समाजे सुव्यवस्थिते, व्यूहे चापि चतुर्व्यूहे परस्पर अनुमते, 'कर्मणा वर्णता' यत्र, 'वयसा आश्रमिता' तथा, 'सु-राज्य' च, 'स्व-राज्य' च, स्वा राज्य' चापि तत्र वै। आत्मदर्शनसिद्धान्त-प्रयोगेण विना, नहि चतुर्भिराश्रमैर्वर्णै. समाजस्य व्यवस्थिति, "चातुर्वर्ण्यं, त्रयो लोका, चत्वारश्चाश्रमा पृथक्, भूत भव्य भविष्य च, सर्वं वेदात् प्रसिध्यति" (म०), मनुष्याणां स्वभावानां, योग्यतानां च कर्मणां, चतुर्णां च पुमर्थानां, साधनानां तदुपायिनां, धर्माणां च वयोभेदाद् आश्रमाणां च, तत्त्वत भेदा, सर्वेऽपि सिध्यति

सम्यग्दर्शनत विल । वेदो हि वेदन, ज्ञान, सम्यग्दर्शनमेव हि, विज्ञानगर्भ प्रज्ञान, सर्वेदुद्भववदाद् यत् । यत्र नैव मनुष्याणा जीवन सुव्यवस्थित, सम्यग् दर्शन निष्णात महापुरुष शासित, ( १७० ), स्वार्थान्धा यत्र 'नेतार', स्वयं 'नीता' इ 'दृष्टिभि, अ सम्यग्दर्शिनो, धूर्ता, मूर्खा एव कष्टेगुणा, शक्तिमत् कुल जाता या मूर्खा, प्राक्तनकर्मणा, कुमार्गगु, उत्पथं क्रिट 'नयति' जनतामपि, यथा विकृत 'नेत्रेण' 'नीयेता' अन्धो अटे, तथा, 'पर राज्य', 'कु-राज्य' च, 'नारक राज्य' एव तत् । "यौवन, धनसम्पत्ति, प्रभुत्व, अविवेकिता, एकैकमप्यनर्थाय, किमु यत्र चतुष्टय", "अविद्याया अन्तरे वर्तमाना, स्वयधीरा, पडित म्मन्यमाना, जघन्यमाना, परियति मूढा, अन्धेनैव नीयमाना यथान्धा "(उ०)। स्व स्व उचिताना धर्माणा, निर्दिष्टाना विवेकत, पालनायैव वर्त्तेत यत्र 'पूर्ण स्व तन्त्रता', 'पूर्ण स्व धीनता', नित्य 'स्वा राज्य तत्र वर्तते । परेषा पीडनार्थ, हत्यार्थे, लुठनाय वा, बलात्काराय वा स्त्रीषु, पापाय विविधाय च, 'पूर्ण स्व तन्त्रता' यत्र, 'पूर्ण स्व धीनता' तथा, भवेद् यत्र तु, तत्रैव 'रौरव राज्य' ऊर्जति । शब्द मिथे अर्थशून्ये या उक्ता 'पूर्ण स्व-तन्त्रता', अध्यात्मरव्या सा नून पूर्णा मरु मरीचिका ( १८० ), जनन यस्य देहस्य, पालन, जीवन तथा, पितृ तन्त्र, मातृ तन्त्र, वायु अधीन प्रतिक्षण, अन्न तन्त्र, पान-तन्त्र—तस्य 'पूर्ण स्व तन्त्रता ऽकाक्षा' यापि अथवाऽऽशा 'सपूर्णा भ्रान्ति तन्त्रता' । आत समाज, निवसन् समाजे, क्रूर ाधिकारैश्च सदैव बद्ध सार्ध परैर्, भौतिकपिंड एव, पूर्ण स्व-तन्त्रो भविता कथ नु ? य केवली, सर्वगतश्च, सर्व, नाऽन्यद् यत किंचन कुत्रचिद् च, सर्व तु य स्व-मयं पश्यतीह, स्वस्मिंश्च सर्व, च तथा ॥ अस्मिन्, स एक एवास्ति सदा स्व तन्त्र, सोऽन्यश्च यं तत्रयिताऽखिलस्य । "प्रशासितार सर्वेषा अणीयासमणो रपि, रुक्माभ, स्वप्न धी गम्य, त विद्यात्पुरुषपर' (म०) । "आर्ष धर्मोपदेश च वेदशास्त्राविरोधिना, यस्तर्केणानुसंधत्ते स धर्म वेद, नेतर, × पितृदेवमनुष्याणा वेदश्चक्षु सनातन, अशक्य अप्रमेय च वेदशास्त्रमिति स्थिति" (म०), अनाया सेन न प्राप्तु शक्यं तद्दर्शनं, ननु, यद्वेद शास्त्रे, वेदान्ते, निर्दिष्टं वै महर्षिभि, जिज्ञासुना ॥ एकाग्रेण प्रयत्नेन न दुर्लभ । वेदाना स्थित अतेषु, यद् 'औपनिषद' स्मृत, वेदस्य शास्त्र तद् हि एव, 'रहस्य' चेत्यपि, इति दिक् । ( १९० ) यथोक्त यमराजेन वाराय नचिकेतसे, "न सुविज्ञेयं एतस्मात्, धर्म सूक्ष्मोऽणुरेष हि"

( उ० ) । "छन्दः पादौ तु वेदस्य, हस्तः कल्पोऽथ पठ्यते, मुखं व्याकरणं प्रोक्तं, शिक्षा घ्राणं तथोच्यते, ज्योतिषामयनं चक्षुः, निरुक्तं श्रोत्रमीर्यते", आयुर्वेदोऽस्य नाभिस्तु, गान्धर्वः कंठः ईर्यते, ऊरू च शिल्पवेदोऽस्ति, धनुर्वेदो महाभुजौ, कामशास्त्रं तु जघनं, अर्थशास्त्रमथोदरं, हृदयं मानवो धर्मः, मूर्धा वेदान्तः इष्यते ; मूर्तिमान् भगवान् वेदः एवमंगैः सुसंहतैः, विराजते; सदा उपास्यः सर्व-कल्याणं ईप्सुभिः । "याः वेदबाह्याः स्मृतयः, याश्च काश्च कु-'दृष्टयः', सर्वास्तास्तु तमोनिष्ठाः, प्रेत्य चेह च निष्फलाः ; अप्यर्वाक्कालिकतया, अनित्याः, अनृताः अपि, उत्पद्यते च्यवंते ताः", वर्षर्तोरिव छत्रकाः ( म० ) । राग-द्वेषौ तमो, मोहः ; 'तमोनिष्ठा'स्तु तन्मयाः ; 'सनातनस्य' सत्यस्य 'धर्मे' तु परमात्मनः, न निष्ठिताः, यतः, तस्माद् अनित्याः, अनृताः, अपि ; व्याहन्यमानाश्चान्योन्यं संवर्षाद्, बहुसंख्यकाः, जंघन्यमानाः, दंदह्यमाणाः, तास्तु परस्परं,क्षुद्राल्पबुद्धिजनिताः, भवंति क्षणभंगुराः, न स्थातुं चिरकालाय शक्नुवंति च कुत्रचित् । ( २०० ) । परस्परं विरुद्धानां,अन्योऽन्यघातिनां,तथा,कोलाहलोऽस्ति वादानां असंख्यानां तु साम्प्रतं, समाज राजनीति-अर्थ-इतिहास-विषयेष्वपि, तथाऽन्येषु च, शास्त्रेषु, बुद्धिभ्रमोन्मादकरो, यथा । आत्मदर्शनजा यत्र सु-'दृष्टि'-'नीति'-कारिणी,'मैत्री', 'नपति'सिद्धान्तैः, शाश्वतैः, सुमतिष्ठितैः तस्मिन् सनातने नित्ये 'स्व-भावे' परमात्मनः ; उत्पत्तिच्युतयस्तत्र, विप्लवोपद्रवास्तथा, संघर्षश्चापि वर्णानां ईर्ष्यया स्पर्धनेन च, प्रत्यहं नानुभूयन्ते ; न नित्यं चानवस्थितिः । स्थापिता यत्र मर्यादा चतुर्वर्णाश्रमात्मिका, तत्रैव सुप्रयोगोऽस्ति विद्यानां दर्शनस्य च ; शास्त्राणां व्यवहाराणां सुसम्बन्धश्च तत्र हि ; प्रत्यर्थस्य सर्वस्य तत्रैव चरितार्थता ; चतुर्वर्गफलप्राप्तिः सर्वैस्तत्रैव चाश्रमैः ; स्वप्रकृत्यनुसारेण तत्र जीवोऽन्यवाप्नुयात्, सर्वोऽपि, स्व-स्वशक्तीनां, समाजस्य च भूतये, धर्म्यं विकासं, क्रमशः अपि, आश्रमाद् आश्रमं व्रजन् ; समाजश्चाखिलो भूयात् सदा सर्वसमृद्धिमान्, 'क्षय'-रोगेण निर्मुक्तः, बलवान्, 'वृद्धि'मान्, सुखी, उत्तमानां च दैवीनां आस्पदं सद्गुणसम्पदां ( २१० , आदित्य० ४२२५ ) ।

ॐ

## १६ अध्याय

### 'हिन्दू' समाजस्य पुन संस्करण कथ ?

(२७) प्र० समाजस्यास्य 'हिन्दूनां' पुन संस्करण, कथ व्यवहार्येण रूपेण सम्प्रवेश्य क्रियेत च ?

उ० पुन पुन पूर्वमुक्त—सिद्धान्ताना प्रचारण, आवश्यक नितान्त तु, तस्मा-स्ति प्रथम क्रम । सत्सिद्धान्तप्रचारेण सज्ज्ञान तु विवर्धते, ततो भावाश्च शुध्यति, सदिच्छा जायते तत, महाजने समग्रेऽपि ; द्वितीयोऽय भवेत् क्रम । साम्प्रतु, सत्प्रयतन, सच्चेष्टा, सत्क्रिया तत, तृतीयोऽय क्रमो हि, एव सम्यस स्यात् 'त्रिविक्रम'। शब्दो ऽत्र आग्लभाषाया 'थियरी' 'प्रैक्टिस्' इत्यपि, मतिर्-गति, नयग् चार, शास्त्र व्यवहृतिस्तथा, ज्ञान-कर्म, नीति रीती, दर्शन चरणं सजु, दृष्टि सृष्टि, इति द्वंद्व पर्याया, सस्कृते तयो, ब्रह्म धर्म, पु प्रकृति, द्वंद्व तत्रापि चाऽऽदिम । पूर्व मति शोधनीया, गति शोत्स्यति हि स्वय । प्रचारश्चापि कार्य स्यात्, न शब्दैरेव केवल, किंतु स्वआचरणेनाऽपि, प्रचारणमभुच्यते । आचारेण हि या शिक्षा, सा एव साध्वी, दृढा, ध्रुवा, "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन" (गी०), 'आचार्य' सज्ञा आप्नोति सदाचारेण शिक्षणात् । (१०) । मिता अपि भवेयुश्चेत् सत्यया ते प्रचारका, यदि स्यु 'तीव्रसवेगा' 'सत्य निष्ठा', दृढ व्रत, सेनायां ॥ यथा योधा तत्कार्याय समर्पिता, धरात्मनश्च, आदि मनो, ऋषीणा मैनिकास्तथा, फारसी आग्ल आदि भाषाणा ज्ञानेनापि च सयुता, तत्तद्भाषाऽभि भाषिभ्यो व्याख्यातु भाषया तया, मुस्लिमेभ्यो ऽन्यधर्मिभ्य, क्रिश्चनेभ्यस्तथैव च, भावान् 'मानव' धर्मस्य सर्वसग्रहकारकान्, सन्न्यासिनो, वनस्था वा, 'ऽल्पे कामा', 'सुसमाहिता', नान्यार्थितामिरद्विभा, न 'विक्षिप्ता' इतस्तत', कुर्यु प्रचारकार्य च 'सत्कारेण', 'निरन्तर' (यो० सू०), 'परिव्राजक-सदाभा', गन्तार सर्वदिक्ष्वपि, 'मानवस्य समाजस्य' विष्वक् सस्थापनैषिण, ध्रुव स्यु 'सत्य सकल्पा', ■स्यत्येव स्वकर्मणि ।

प्रचारणीया सिद्धान्ता विस्तराश्च वर्णिता ग्रन्थेनैतावता, भूय सक्षे परत्र कल्पते । (१) आप्नुयुर्ब्रह्मचर्येण यौवन तु नरा, स्त्रिय, "ज्ञान, वीर्य, मह, सर्व, ब्रह्मचर्ये प्रतिष्ठित"। ब्रह्मचर्यस्य सारोऽय इन्द्रियाणा विनिग्रह, दशानां च, स-मनसा, तानि जित्वा तु सर्वजित् । (२०) । 'स्वस्य'

उपरि तु 'राज्यं' यत्, 'स्व-राज्यं' मूलं अस्ति तत्। "ब्रह्मचर्येण तपसा देवाः मृत्युं उपाघ्नत" (वे०) ; मूलं प्राण-द्रुमस्यैतद् 'ब्रह्मचर्यं' यदुच्यते ; यत्रास्य नऽआदरः तत्र नि-कर्षे., पतनं, ध्रुवं। (२) न-प्राप्तयौवनानां च विवाहः स्यात् कथंचन ; वाग्दानं [illegible] मिथः प्रीत्या सम्भवेत् पूर्वमपि अतः। (३) सात्त्विकं कामशास्त्रं च शिक्षेरन् प्राक् तु संगमात्, तथा प्रसूतितंत्रं च, बालोपचरणं तथा। (४) 'धर्मजं' सुतमिच्छेयुः, नेतरान् 'कामजान्' बहून् ; द्वाभ्यां त्रिभिर्वाऽपत्यानां तुष्येतामेव दम्पती ; यदा तुच्छ ब्रह्मचर्यं शक्नुयातां न रक्षितुं, कुर्यातां गर्भरोध-स्योपायान् वैज्ञानिकानपि ; तीक्ष्णं दण्ड्यो भवेत् ताँस्तु प्रयुञ्जन् अविवाहितः, पुरुषश्च, अपि, योषा च प्रयुञ्जन्ती अविवाहिता। (५) 'गर्भाधानस्य' संस्कारं कुर्यातां च विवाहितौ, यथा उत्कृष्टं अपत्यं हि जनयेतां ; न चेतरं। (६) प्रति पंचशतं धारतु कुलानां, सूतिकागृहं एकं, सुसज्जं सर्वोपकरणैः प्रसवस्य च ; कुल-प्रतिनिधीभूतसमित्या सुनिरीक्षितं। (७) क्रियतां 'नाम संस्कारः', पुरतः प्रति-वेशिनां। (१०)। (८) 'अन्नप्राशन-संस्कारे' भवेद् 'वृत्ति'-परीक्षणं ; शिक्षके-भ्यः सूचनाय ; न तु निर्णयनं तदा। (९) लालयेत पंचवर्षाणि ; जननी शिक्ष-येद् अपि, शौचादीन्, बालसाध्यांश्चआचारान्, नीतीन्नपीह च ; बालास्ततः पाठ-शालां गच्छेयुर् लब्धुमक्षरं, अध्येतुं च तथा विद्याः, स्वप्रकृत्यनुरूपतः। द्वे पाठ-शाले च स्यातां, कुलपंचशतं प्रति ; एका कुमारीशिक्षार्थं, कुमाराणां तथाऽपरा। (१०) कन्या अष्ट, नव, वर्षान् वा, सौम्यः शिक्षामवाप्नुयात्, वसन्ती स्वगृहे, शालां गच्छन्ती च दिने दिने ; आचार्याभिः, 'गुरु-कुलं' भवेत् चेत्,तत्र कन्यकाः, वसेयुः, कुलवृद्धैः स्वैः काले काले निरीक्षिताः ; बालाः दश, एकादश वा, पुंस्यः सौम्योऽपि वा, समाः, कुमारपाठशालायां, वसन्, स्वे, वा गुरोः, गृहे, एवमेव-अप्नुयाद्विद्याः स्वप्रकृत्यनुकूलतः। पितरौ नयतो बालं गुरोर् 'उप' ; गुरुश्च तं 'पत्र'-सूत्रेण 'उप नाय', 'ब्रह्मण'श्च 'नयेद् उप', इति ; अतो हि मुख्य-'संस्कारं' तं तु 'उपनयनं' विदुः। अनेनैव 'द्वि-ज'त्वं यत्, तस्मान् मुख्योऽयमुच्यते। (४०)। स्त्रीणां च उपनयः कार्यः स्त्रीभिः यादृक् पुरा युगे। "उपनीय गुरुः शिष्यं, शिक्षयेत् (१) शौचं आदितः, (२) आचारं, (३) अग्निकार्यं च, (४) संध्योपासन-मेव च" (म०)। (१) धिषणा चापि, (२) शीलं च, (३) शरीरं चेति, तत् त्रयं, (१) ज्ञानं, (२) इच्छा, तथा (३) कर्म, शोधनं स्यात्, दृढं तथा, (१) सत्यं,

(२) तमो, (३) रजो ऽशाश्च भवेयु परिमाजिता , यया, सा एव उचिता शिक्षा ; अथ साध्य गुरो कुले। (१) ऋतु (२) अहो (३) रात्रि चर्याश्च शिक्षणाया प्रयत्नत , विद्या 'संस्कारिणी' प्राह्या, तथैव 'अर्थकरी' च या , "अर्थागमो नित्य अरोगिता च, प्रिया च भार्या, प्रियवादिनी च, वश्यश्च पुत्रो, अर्थकरी च विद्या, षट् भागधेयस्य सुखानि, राजन्!" (विदुर०)। शस्त्रास्त्राणा प्रयोगश्च शिक्षणीयो गुरो कुले, सर्वे, सुभिक्ष, क्षेमिक्ष, स्वरक्षायै तु सङ्कटे , 'रक्षके' तु विशेषेण ; सामान्येनेव चेतरे । सर्वेषामेव "वर्णाना" सङ्करे 'कालकारिते", क्षत्रियाणा रक्षकाणा अभावे चाप्युपस्थिते, "शस्त्र" तु सर्वे स्याद् "ब्राह्म, धर्मो यत्रोपरुध्यते", आत्मीयाना "परित्राणे", स्वरक्षार्थ "चापि सङ्गरे , स्त्री बालाभ्युपपत्तौ च", योद्धव्य तु विशेषत , सर्वे , द्विजैश्च एकजैश्च, शूद्रैश्च अविचिन्तयन् ; (५०), "नाततायिवधे दोषो हन्तुर्भवति कश्चन , प्रकाश वाऽप्रकाश वा, मन्युस्तन्मन्यु-मृच्छति" (म०)। "क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेद् इति" (वाल्मी० रामा०)। "द्वाविमौ पुरुषौ ख्यातौ सूर्यमण्डलभेदिनौ, योगी योगसमारूढ , शूरश्च समरे हत ।× अधर्म क्षत्रियस्यैव यत् शय्या मरण गृहे, विसृजन् कफपित्तानि कृपण परिदेवयन्, अरण्ये वा विमुच्येत, सग्रामे वा तनु त्यजेत्"(म०भा०शा०)। गुरो कुले तु द्रोणस्य सर्वे वर्णा शिशिक्षिरे। कैकेयी, सत्यभामा च, सुभद्रा चापि दर्शिता , इतिहासेषु, गन्तव्य. समरान् पतिभि सह। 'राजा' दुर्गावती चापि, चाद 'राज्ञी' तथैव च, झाँसी 'रानी' तथा लक्ष्मी , शस्त्रैर्युयुधिरे स्वय । सर्वाप्रणम्या चैवास्ति प्रवीरेषु तु चण्डिका, दुर्गा, गौरी, महादेवी, चाऽन्नपूर्णाऽपि चाम्बिका। "महाविद्या, महाऽविद्या, महामेधा, महास्मृति , महामाया च भवती महादेवी, महेश्वरी। किं वर्णयाम तव रूप अचिन्त्य एतत्, किं चातिवीर्य असुरक्ष यकारि भूरि, किं चाऽहवेषु चरितानि तवाति यानि, सर्वेषु, देवि !, असुरदेवगणा दिकेषु"(दु०स०)। (६०)। स्त्रापत्यरक्षणार्थं तु मातु दूरतरो नहि, गाव स्व शाव-रक्षार्थे वने सिंही भवन्ति वै, व्याघ्रान् तरक्षून् च गात्रै क्षिपन्ति च निघ्नन्ति च। (११) कन्या पञ्चदशादूर्ध्व, विशेषे कारणे ऽसति, विवाह चिंतयेत्, वाच्च अल्प-ल्पेद् उत चाधिक। (१२) युवा तावद् अधीयीत, वसन् स्वे, वा गुरो , कुले, विप्रो विद्यालये यावद् गृह्णीयाज् जीविकाकरीं। तत 'स्नातक'-सस्कार प्राप्नुयात् स , यथाविधि, 'कुल देश-समाजाना सेवा यथावैधा सह करिष्यामि, तथा श्रीणि

शोधयिष्ये ऋणानि च'—इति प्रतिज्ञा कुर्याच्च गुरूणां सविधे तदा, समक्ष च कुलीनानां, पौराणां च समागमे, ऋषित 'यज्ञ' सूत्रेण' धारयन्' व्रतमुत्तम। आचार्यो निर्णयेत् चास्य 'वर्ण,' 'वृत्ति' तथोचिता, श्रावयेत् निर्णयं चापि तस्मिन् जनसमागमे। (१३) चतुर्व्यूह सहायेन, वृत्ति वर्णानुरूपिणीं ससाध्य, स्नातको जीवेत् तया जीविकया एकया। (१४) ततो मिथ परिचयात्, कन्या प्रीता प्रियामपि, सवादिशीलव्यसना, स्युद्वात् 'संस्कार'-कर्मणा, 'सह धर्मं चरो भावा भूयास्व' इति च निश्चयात्। (७०)। (१५) अयोग्य विधिवद् विवा, प्रभाश्रो ध्याय धर्मत, कुल समाज ससेव्य, मनो मोक्षे निवेशयेत्, ऋणानि त्रीण्यपाकुर्वन् आश्रमाद् आश्रम व्रजेत्। (१६) चतुर्व्यूहेषु च एकस्य, सर्वोऽप्यन्यतमो भवेत्, स्वस्य स्वस्य च वर्णस्याश्रमस्यानुसारत। (१७) समान शील-व्यसने भोजनं च विवाहन। "समीति भोज्यान्यन्नानि, आपद् भोज्यानि वा पुन न च त्व भीपमे राजन्, न चैवापद्गता वय" ( म० भा० ), दुर्योधनमिदं प्रोच्य, कृष्णो विदुरमाययौ। (१८) भवेयु नव सस्कारा नृणां पुसा तथैव च। गर्भाधान, नामकर्म, तथाऽन्न प्राशन शिशो, अथ उपनयन स्नान,विवाहस्तदनन्तर, वानप्रस्थ प्रवेशश्च, सर्व-सन्यसन तथा, अन्त्येष्टि-कर्म चेवापि, सस्कारा स्यु नव एव हि। कस्यचिच्च विपदोऽपि वृथा पुन, सम्यग् विमृश्य च, वेदमंत्रै उदात्तैश्च, हेतु मद्भिश्च कर्मभि, कालोचितानां यैश्चित्ते सद्भावाना भवेत् स्थिति गभीरा, सत्क्रियैरातर चित्तदेही च वस्तुत'। (१९)वर्णाश्रम व्यवस्था च, कर्मणा, वयसा, तथा, चतुर्धा व्यूहन चापि समाजस्य, विवेकत —उत्तम मूलमेवैतद् भद्रोपायाश्च सस्कृते, ■ पायो करण चार्य-सन्ततेस्तु समन्तत। (८०)। आहारस्य, विहारस्य, चरित्रस्य च शुद्धता, परस्पर च सौहार्दं कुलस्य प्राणिनां अपि, आत्मापम्योमिव प्रेमाऽनुराग, सहचारिता, मितत्व सततेश्चापि, जीविकायाश्च निश्चिति, परमात्मनि निष्ठा च, समाजे शांति हेतव। (२०) सर्व प्रसवितु, सूर्ये बिम्बितस्य, परात्मन प्रत्यक्षस्यापि अदृश्यस्य देवस्य, जगदात्मन, सवितुपासन हि एक,सध्यावन्दन एव च, ध्येयो जपश्च गायत्र्या सम्र एकतयैव हि, उपासना इय श्रायेष्य पर्याप्ता ऽप्य-नपेक्षिणी। 'नोपतिष्ठति य पूर्वां, नोपास्ते यश्च पश्चिमा", आर्यत्वाद् भ्रश्यते नूनं द्विजत्व नास्य सिध्यति। "समानी प्रपा, सह वो अन्न भाग, समाने योक्त्रे सह वो युनज्मि, समानो मन्त्र, समिति समानी, समान मन, सह

चित्तमस्तु च । समान मन्त्र अभिमन्त्रये व ,समानेन वो हविषा जुहोमि"(वे०) । (९०) । बहूना किंतु "अनाधारा धारणा नोपपद्यते", "आत्मस्थ ये न पश्यति देव, मार्गंति ते यहि", "द्वे वाव ब्रह्मणो रूपे, मूर्तं चामूर्तमेव च , यन्मूर्तं तदसत्य, यद् अमूर्तं सत्यमेव तत्' (बृ० उ०) । स्वप्रकृत्यनुरूप च सर्वाऽपीष्टम-पेक्षते, "ये यथा मा प्रपद्यते, तांस्तथैव भजाम्यहं" (गी०), "भक्ताना अनुक म्पार्थं देवो विग्रहवान् भवेत्", मूर्तांद् अमूर्तं नयन अभीष्ट परम खलु,न मूर्तिका-ग्रीडनकेषु आमृत्योनिरतो भवेद्–इत्यादिहेतुभि ,स्थाप्या मिता काश्चन मूर्तय , अथान्तरतया, ऽमूर्तस्य प्रतीका इवात्मन । उपासना मन्दिराणि विशालानि, मितानि च, सुन्दराणि, पवित्राणि, सर्वदा निर्मलानि च, सुदृढानि, प्रशस्तानि, पुर शोभा कराणि च, तथा सर्वजनीनानि, न बहूनि, भवतु च , वाटिकाभिर्-यथाशक्य परितो मण्डितानि च । ससृष्टानि गृहैरन्यैर् न स्युस्तानि कथचन । मूर्तिर मुख्या च तत्रैका सूर्यस्य जगदात्मन , वस्तुंल्ल च अक्ष ( चक्षुर्मुखादि ) रहिता दीप्यन्ती किरणावृता, बिम्बेनैश, अनुभिन्नाना, ब्रह्म जीव तुरूपिणी , शुभ्रा, रौप्यमयी चापि, निर्मिता स्फटिकेन वा । (१००) । गिरा ब्रह्मा शिक्ष-काणा , लक्ष्मीर् विष्णुस्तथा विशा , दुर्गा शिव रक्षकाणा, अश्विनौ सेविना अपि—एता विशिष्टेष्टाना च देवाना सतु मूर्तय । स्वे स्वे गृहे यथेष्ट तु सन्त्व न्या अपि मूर्तय , न तु देवालये काश्चिद् अन्या स्यु सार्वलौकिके । उपासना गृहे सर्वं जनीने मूर्तयस्त्वमा —प्रकाशात्म, रवेर्बिम्ब, भ्राजिष्णु, किरणा न्वित, ( न अतिदीप्त तथा यत्स्याद् चक्षुषा क्षोभकारक, किंतु प्रसादन, कान्त, नेत्राणां प्रीतिवर्धन ), संस्थाप्य पूर्वभित्तेस्तु मध्ये महति मन्दिरे । तस्य चापि चतुर्दिक्षु यथास्थान नवग्रहा, भ्रमन्त इव वृत्तेषु, दर्शनीया समन्तत । उत्कीर्णैतापि 'गायत्री' मन्त्रो बिम्बादधस्तथा । अन्यानि आदित्य सूक्तानि श्रुत्युक्तानि स्मृतानि च "सूर्य आत्मा जगतस्तस्थुषश्च नमस्ते, आदित्य ', त्वमेव प्रत्यक्ष ब्रह्मासि, विष्णुरसि, रुद्रोसि ' (सूर्य०उ०), "एक एव हि लोकाना सूर्य आत्मा आदिकृद् हरि " (मा०), "नम सवित्रे, जगदेकचक्षुष, जगत्प्रसूतिस्थितिनाश हेतवे, त्रयीमयाय, त्रिगुणात्मधारिणे, विरिञ्चि नारायण शकरात्मने" । (११०) । यानि नामानि चान्येषु धर्मेषु परमात्मन , तत्तल्लिपिभिरेवापि, लिप्या सस्कृतया तथा, उत्कीर्णैश्च तत्र च , सर्व धर्म समन्वयात्,स्थाप्यैरन् मूर्तयस्त्वन्या , अन्य

भिन्निश्रये, यथा—एकस्यां मञ्जूषायामपि, सरस्वत्यास्तथाऽश्विनोः चतुः-सनत्कुमाराणां बालानां वेदरूपिणां; विष्णु-लक्ष्म्योस्तथाऽन्यस्यां, अपत्यत्रिकयोरपि, रुक्मिणी-रति-सीतानां, कृष्णस्य-नन्द-रामयोः ; तृतीयस्यां शङ्करस्य पार्वत्याः, स्कन्द-सेनयोः, गणेश-सिद्धि-ऋद्धीनां, सुन्दराकृतयोऽखिलाः, सर्वाः मनुष्यहृदिस्थः मूर्तयः स्युः; न भीषणाः; न मुखानि तु चत्वारि, न चत्वारोऽपि बाहवः, न षट्-शिरांसि, नो पंच, न गजस्य शिरोऽथवा, नाष्टौ भुजाः, न कपाल-माला-सर्पादि-भूषणं। एतादृशाकृतीनां तु देवानां वर्णनं हि,यत् पुराणेषु कृतं,तत्तु रूपकं ह्येव केवलं; व्याख्याकारैः पंडितैश्च विद्वद्भिर् 'व्यास'-नामकैः, महाजनाय व्याख्येयं 'कथा'-काले च रूपकं; न मूर्तयः तदाकाराः स्थाप्याः देवालयेषु; यत् तासु एव रमते चित्तं, दृढं गृह्णाति तास्तथा, वास्तवत्वेन, बालानां, सुकुमारधियां अपि; न निराकार-तत्त्वेषु ततोऽभिमुखतां इयात् । (११०) । एतद्दोषं प्रपश्यद्भिर्, अन्य-धर्मावलम्बिभिः, मूर्तीर् अशेषतस् त्यक्तुं कथितं; न तु पालितं । एकूकान्, मुस्लिमाः; बुद्ध-जिनयोर्, अनुयायिनः, मूर्तीस्तयोः; तथा 'सिक्खाः', 'ग्रन्थ'-नामक-पुस्तकं; क्रिश्चनाः, 'जीसस'स्य,अपि तन्मातुः, प्रतिमाः, तथा चित्राणि अपि विचित्राणि, 'क्रास'-यंत्राणि चैव हि; पूजयन्त्येव सर्वथ, बहु वा, न्यूनमेव वा । मानवीं प्रकृतिं दृष्ट्वा, मूर्तीनां विषयेऽपि, अतः 'आश्रयेत् मध्यमां वृत्तिं, अति चैवापि वर्जयेत्'; अरुन्धती-दर्शनवद्, अमूर्त मूर्तितो नयेद्; असत्याद् सत्यं मृदूपायैः कृपेन् जनान् । रामायणं वाल्मीकेर्, व्यासस्यापि च भारतं, मुख्यानि च पुराणानि, ग्रन्थाः सन्तुत्तमोत्तमाः, ( क्षिप्त-श्लोकान् असद्-भावान् विशिष्यापि विरिच्य तु ) । न सन्त्यन्तेऽन्य-भाषासु चेदृशाः बुद्धिवर्धनाः, एकैकाख्यानकैरेवं विविधार्थ-प्रबोधनाः,बहुश्रुतेन यदि ते व्याख्यायन्ते यथार्थतः । कस्यामपि च भाषायां नेदृशाः बुद्धिनाशकाः, यदि अल्पज्ञेन मूढेन व्याख्यायन्ते अयथार्थतः । (१२०) । मंदिरं, प्रतिसाहस्रं नृणां एकं भवेदपि, न पुनर्बहुसं-ख्यानि,योग्यां वीथ्यां,पदे पदे,स्वच्छं सुमृष्टं चापि स्यात्, न पुष्पादिक-कर्दमं; अर्चा च दर्शन-ध्यान प्रणामैरेव; नान्यथा; न पुष्पपत्रसलिलैः, न मिष्टैर्, न विलेपनैः, न ताम्र-रौप्य खण्डैः वा ; न नादैर्मैरवैरपि ; उत्तमं सुभ-गानं च, वाद्यं चापि, भवेत्तु, सुप्रबद्धेन रूपेण, निर्दिष्ट-समयेषु च । देवालयेन यद् भाव्यं आधि-व्याधि हरेण, तत् प्रत्येके स्यात् चिकित्सायाः शाला, चैकश्चिकित्सकः, स्त्री-वैद्या

च तथैवैक्य, तथोपकरणानि च। इतिहास पुराणाना व्याख्यायै, प्रति मन्दिर शाला एका च प्रशस्ता स्याद्, विद्वान् व्याख्याकरस्तथा, यो रूपकाणि व्याख्यायाद् युक्तियुक्तैश्च हतुभि , नाऽन्धश्रद्धा वर्धयेत, नार्थयेतापि दक्षिणा , प्रोत्साहयेच्च जिज्ञासो, शमयेच्च च सदुत्तरै , युक्तियुक्तै हेतुमद्भि , लोपकै , ज्ञानवर्धकै । तस्या व्याख्यानशालाया , चिकित्साया गृहस्य च, चतुर्थ्यूंहा एव कुर्यु निवाहस्य प्रबन्धम, यथा पाठस्य शालाया , प्रसवस्यापि वै यथा । स्वागता सन्तु सर्वेषु मन्दिरेषु एषु मानवा सर्वेऽपि , 'हिन्दवो' वा स्यु , स्युस्तथा वाऽन्यधर्मका , नियमाना स्वच्छताया येऽपि स्यु प्रतिपालका । प्रेम्णा पूत मनो येषा, देह स्नानादिभिस्तथा, ते सर्वे स्वागता सन्तु , सात्त्विकाऽनन्दकाङ्क्षिण । ( १४२ , आदित ४३६७ ) ।



१७ अध्याय

'श्रद्धा' विवेचन

(२८) प्र० 'नान्धश्रद्धा वर्धयेत'—प्रदुष, उचित हि सत् , विना श्रद्धा न किंचिच्च क्रियते कार्यमुत्तम , विरोधिवद् इमे वाक्ये , कथ भूयात् समन्वय ?

उ० सात्त्या एव हि सा श्रद्धा, या पात्रे स्थाप्यते मुदा, नाऽन्धश्रद्धा पुन ,किन्तु उन्मीलिताक्षा, विवेकिनी पात्रापात्र-सदसतोर्, ज्ञान विज्ञान वर्धिता, सात्त्विकी खलु सा , श्रद्धत पात्रे दानं तु सात्त्विक । मा भूद् अपात्रे श्रद्धा वा, दान, ज्ञान, धन, बल । "त्रिविधा भवति श्रद्धा, देहिनो, सा स्वभावजा, सात्त्विकी, राजसी चैव, तामसी चेति, तां शृणु, सत्त्व (प्रकृति ) अनुरूपा, सर्वस्य, श्रद्धा भवति, भारत ! श्रद्धामयोऽय पुरुष , यो यच्छ्रद्ध स एव स "(गी०)। श्रद्धत्ते सात्त्विको देव (परमात्मन), यक्षरक्षासि राजस , प्रेतान् भूतगणाश्चापि श्रद्धत्ते तामसो जन । यथाऽन्येषा महार्थानां शब्दानां दुर्दशा कृता, स्वोत्तमार्थाद् विपर्यस्त 'श्रद्धा' शब्दोऽप्ययं तथा । 'श्रत्, सत्य' इति वेदेषु ; सत्यवेन दधाति या, य कश्चिदुत्तम भाव पदार्थ, पुरुष नु वा, सा बुद्धिरेव सत् 'श्रद्धा' , न अधम लक्ष्य आश्रिता, मूढग्राहेण, वा असत्य पदार्थ, दुर्जन नु वा । "श्रद्धा प्रातर्हवामहे, श्रद्धा मध्यदिन परि, श्रद्धा सूर्यस्य निम्लुचे, श्रद्धे ! श्रद्धापयेह न " (वे०) । (१०) । सवितुरुपास्तिरेवात्र, समार्या 'श्रद्धया' ननु , 'परमात्मनि वै श्रद्धा, साय प्रातर्ह-

वामहे' । श्रद्धाया महिमा ऋग्वेद श्रद्धासूक्तेन सूच्यते, तादृश्या विना, या माता महता वीरकर्मणो, तपस्यानां च योगानां, आत्मसाक्षात्कृतेरपि, उच्चलक्ष्यस्य लाभाय 'श्रद्धया' तपन 'तप', "आविवेश यथा 'श्रद्धा', बालक नचिकेतस" ( कठ० उ० ) । असत् श्रद्धा पुनर्योनि दानानां यज्ञकाय च, कार्याणां च निकृष्टानां, नरकाय गतेरपि । 'गुरू' भवितु-कामा ये, मुग्ध चित्त अपहारिण –'गुरौ श्रद्धा भृशं कार्या, न हैतत् वाक्य तु तद्वच, नास्तिक्यमेव जिज्ञासा हि, अहमेव गुरुस्तव, यद्ब्रवीमि शास्त्र तद्धि पुत्र, धन स्व मदर्पणं, प्राप्स्यसि स्वर्गमेव च—इत्यादि बहु वादिन, 'इद वृन्दावन विद्धि, मां विद्धि मदनमन्दन, आत्मान गोपिकां विद्धि, विहरस्व यथा सुख'—एव चरित्रभ्रष्टा ये, परस्त्रीभ्रष्टकारिण, 'सेव्या पथ न काशाश्च, तैरेव सुखजीवन'—एव पापिष्ठभावा ये, पापिष्ठ आचरणास्तथा—तेषु श्रद्धा, महत्पाप, लोक सग्रह नाशक । (२०) । तादृशा वञ्चका, दुष्टा, क्रूरा, कपटिनो भृशं, धर्म कर्म विलोप्तार, लोक विग्रह-कारका । चातुर्वर्ण्यव्यवस्थान, चातुराश्रम्यमेव च, धर्म कर्म विभागेन, लोक सग्रह कारक । "विरला गुरव ते, ये शिष्य सतापहारका, बहवो गुरवस्ते ये शिष्यवित्त अपहारका" ( गुरुगीता ), ईदृशेषु तु या श्रद्धा सा वै नरकगामिनी, ईदृशैरेव सर्वोऽयं निरये पातितो ऽधुना । *अन्येऽपि सन्ति ये नून नैतादृश पापबुद्धय, तथापि मोहिता स्वार्थं विपर्ययन्ति स्वय, ततो विपर्यस्यति भावांश्च, शब्दान्, भार्यान् मुधैव च, जिज्ञासाया नृथा भीता, भक्तानां उत्तरे यत, विवर्त्तयति प्राचीनान् पाठान् सुविशदान् अपि, मोहनार्थमनुयायीनां, विक्षेपाय अपथे तथा । "श्रुतिस्तु वेदो विज्ञेयो, धर्मशास्त्र तु वै स्मृति, ते सर्वार्थेषु अमीमास्ये, ताभ्यां धर्मो हि निर्बभौ"—इति प्रचलित पाठ, क इवार्थोऽस्य वै भवेद् ? श्रुति स्मृति अर्थ निर्धारे 'मीमांसा' शास्त्रमुत्थित, "ते सर्वार्थेषु मीमांस्ये"—इत्येवात्र उपपद्यते, ( ३० ), "यस्तर्केणानुसधत्ते स धर्मं वेद नेतर, × प्रत्यक्ष च, अनुमान च, शास्त्र च विविधागमम्, त्रय सुविदित कार्यं, धर्म शुद्धिमभीप्सता"—इत्यप्यत्र न्याय प्रोक्त मनुना हेतुपूर्वक ; "हेतुभिर्धर्ममन्विच्छेत्, न लोक विरस चरेत्"—एव व्यासोऽपि वदति, भारते शान्तिपर्वणि । किंतु जिज्ञासया भीता, पाठं अपकर्षन् इमान्, प्रक्षिप्यन्तो दौर्बल्य स्व, गुप्त्यालिप्सन् पुन—"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विज, स साधुभिर्बहिष्कार्य, नास्तिको वेदनिन्दक" (म०),

'जिज्ञासैवास्ति नास्तिक्यं', 'दोषं कोपेन पूरयेत्'—इति आश्रयन्तो श्रुनीतिं सद्धर्म-ध्वंस कारिणीं। मा तयोरवमानोऽस्तु ; किंतु संशयिते सति 'शब्दे', ऽनुमानमेव स्यात् प्रमाणं बलवत्तरं ; ताभ्यां च, अप्यनुमानाच्च, प्रत्यक्षं बलवत्तमं ; "न श्रुतीनां शतमपि, घटं पटयितुं क्षमं" (भामती) ; श्रुतीनां भवति द्वैधं, इत्यप्युक्तं पुनः पुनः, "श्रुतिद्वैधे, यथेष्टं"चाऽपरैरित्थापि निर्णयः, मीमांसकैर्द्वि तर्कस्तु स्वयमेव कृतः स्फुटः ; यावत्तस्माद् "न मीमांस्ये" इति नैवोपपद्यते। (४०)। नैसर्गिकौ गुरू बाल्ये पितरौ, रक्षकौ परं, पालकौ पोषकौ स्निग्धौ, श्रद्धेयौ स्तः स्वभावतः, बालोऽप्यव्यक्तया बुद्ध्या श्रद्धत्ते तौ निसर्गतः। सुपरीक्ष्य, द्विजं यं, तौ 'नयेयुर' 'उप',बालकं, सोऽपि प्रकृत्या श्रद्धेयो बालकस्यास्य भविष्यति ; सद्गुरोर्न विशेषोऽस्ति शिक्षणे पुत्रशिष्ययोः ; गृह्णाति येन मंत्रेण गुरु शिष्यं, किल, आशयः तस्यापि वाचमेवास्ति, यत् पुत्रीक्रियते ह्यमौ ; "मम व्रते ते हृदयं दधामि, मम चित्तं अनुचित्तं ते अस्तु, मम वाचं एकमनाः जुषस्व, बृहस्पतिस्त्वा नियुनक्तु मह्यं"। 'पुत्रत्व'करणायात्र, आवाह्यते तु 'बृहस्पतिः' ; 'जायात्व'करणायास्मिन् मन्त्रे देवः 'प्रजापतिः'। ईदृशो यत्र सम्बन्धः पवित्रो गुरुशिष्ययोः, तत्र श्रद्धा उचिता पूर्णा स्नेहः पूर्णस्तथैव च। "प्रज्ञां ददाति यदाचार्यः, तस्मात् सः गुरुरुच्यते" ( वा० रा० २ का० अ० १११ )। "त्रयः पुरुषस्य गुरवः, माता पिता आचार्यश्च" ( विष्णुस्मृ० )। "कस्माद् आचार्यः ? आचारं ग्राहयति, आचिनोति अर्थान्, आचिनोति बुद्धिं इति वा"(नि० १,२,२)*। यदि प्राप्तवयाः शिष्यः, व्यवहारक्षमः, तदा, तेन श्रद्धा विधातव्या स्वयमेव परीक्ष्य वै। (५०)।

---

*शास्त्रं, शिष्यः, तथाऽऽचार्यः, परीक्ष्याः ते त्रयोऽपि च—वाक्यैर् उदारैर् आह एवं, चरको विद्वदग्रणी। "शास्त्रमादौ परीक्षेत; विविधानि हि शास्त्राणि प्रचरन्ति लोके; तत्र, सुमहद्यशस्वि, धीरपुरुषाऽऽसेवितं, अर्थबहुलं, आप्तजनपूजितं,...हितं,... आर्षं... पुष्कलाभिधानं अकष्टशब्दं, क्रमऽगतार्थं, अर्थतत्त्वनिश्चयप्रधानं, संगतार्थं,... आशुप्रबोधकं, लक्षणवच्चोदाहरणवच्च, यत् शास्त्रं तद् अभिप्रपद्येत।... ततोऽनन्तरमाचार्यं परीक्षेत ; तद्यथा—पर्यवदातश्रुतं, परिदृष्टकर्माणं, दक्षं, दक्षिणं, शुचिं,... प्रकृतिज्ञं, प्रतिपत्तिज्ञं ;... अनहंकृतं, अनसूयकं, अकोपनं,... शिष्यवत्सलं, ज्ञापनसमर्थं, अध्यापकं ( आचार्यं शुश्रूषेत )। आचार्यः शिष्यं चाऽऽदितः परीक्षेत ; तद्यथा—प्रशान्तं, आर्यप्रकृतिकं, अक्षुद्रकर्माणं, ऋजुचक्षुर्मुखनासावंशं ; धृतिमन्तं, अनहंकृतं, मेधाविनं, सुतर्क-

"न विश्वसेद् अविश्वस्तं, विश्वस्तं नाति विश्वसेत्, न चाऽत्यन्तं अविश्वस्तो, भवेदिति बृहस्पतिः" । यथा अन्यत्र, तथैवात्रापि, 'अति सर्वत्र वर्जयेत्' ; श्रद्धां कुर्याद् गुणान् दृष्ट्वा, दोषानपि परीक्ष्य च ; 'विद्वांस्तु गुण-दोषज्ञः' ; न भवेच्छ्रद्धया जडः । 'आत्मनोऽन्यत्र यस्मिन् नु श्रद्धां आत्यन्तिकी अयं करोति, एवं स मृषाऽन्यः परादत्ते', इति श्रुतिः (बृ० उ०) । "उद्धरेदात्मनात्मानं,नाऽऽत्मानं अवसादयेद् ; आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ; बंधुरात्माऽऽत्मनस्तस्य येनाऽत्मैवाऽऽत्मना जितः ; अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ; × आत्मन्येवाऽऽत्मना तुष्टः, स्थितप्रज्ञः स उच्यते ; × यस्त्वात्मरतिरेव स्याद्, आत्मतृप्तश्च, मानवः, आत्मन्येव च संतुष्टः, स स्वराड् भवति ध्रुवं ; × यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन् आत्मनि तुष्यति, × स निश्चयेन योक्तव्यो योगो ऽनिर्विण्णचेतसा ; बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखं, स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ; × सर्वभूतस्थमात्मानं, सर्वभूतानि चाऽऽत्मनि, ईक्षते योगयुक्ताऽऽत्मा सर्वत्र समदर्शनः" × (गी०);(६०); "सर्वेषामपि चैतेषां आत्मज्ञानं परं मतं, तद्धि अग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः । × आत्मनैव सहायेन सुखार्थी विचरेद् इह ;

स्मृतिसंपन्नं उदारसत्त्वं, तत्त्वाभिनिवेशिनं, निभृतं, अनुद्धतं, अर्थतत्त्वभावकं, अकोपनं, अव्यसनिनं, शीलशौचाऽऽचारानुरागदाक्ष्यदाक्षिण्योपपन्नं, अध्ययनाभिकामं, अर्थविज्ञाने कर्मदर्शने चानन्यकार्यं, अलुब्धं, अनलसं, सर्वभूतहितैषिणं, आचार्यसर्वाऽऽनुकरं'''एवंगुणसमुदितं शिष्यं अध्याप्यं आहुः । (२२) । (अतः परम्, आचार्यः शिष्यं अनुशास्ति–एवं एवं त्वया ब्रह्मचारिणा सता आचरितव्यं ) । (अन्यच्च वदति,) कृत्स्नो हि लोको बुद्धिमतां आचार्यः, शत्रुश्चाबुद्धिमतां, अतः अभिसमीक्ष्य, बुद्धिमता, अमित्रस्यापि धन्यं, यशस्यं, आयुष्यं पौष्टिकं, लौक्यं ( लोकहितं ) उपदिशतः, वचः श्रोतव्यं अनुविधातव्यं चेति" ( चरक०, विमा० अ० ८ ) । आचार्य शिष्ययोर् एवं परस्परपरीक्षणं, शब्दैः परिमितैरेव उपदिष्टं सुश्रुतेन च ; ब्रह्मचारिजनप्रचारं विद्यार्थिनं अनुशिष्य, आचार्यो ऽधिकं एतत् प्रतिजानाति सुश्रुतः—''': अतोऽन्यथा ते वर्तमानस्याधर्मो भवति, अफला विद्या, न च प्राकाश्यं प्राप्नोति; अहं वा, त्वयि सम्यग्वर्तमाने, यदि अन्यथादर्शी स्याम्, एनोभाग् भवेयं, अफलविद्यश्च" (सुश्रुत०,सूत्र०,अ० २) । शिष्योऽशक्तो भवेद्यत्र बाल्याद्, गुरु-परीक्षणे, बालस्य पितरौ तत्र तत्कार्यं कर्तुं अर्हतः । (३०) । पूर्वं उक्तोऽयं यस्तु अस्ति मन्वादेशः श्रुतेरपि ।

आत्मज्ञाने शमे च स्याद् वेदाभ्यासे च यत्नवान्, × आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथाऽऽत्मनः, माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम्, × × सर्वमात्मनि संपश्येत् सच्चाऽसच्च समाहितः, सर्वं ह्यात्मनि संपश्यन्, नाधर्मे कुरुते मनः × आत्मैव देवताः सर्वाः, सर्वमात्मन्यवस्थितम्, आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्, ×, एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना, स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्। सर्वभूतेषु चात्मानं, सर्वभूतानि चात्मनि, समं पश्यन्, आत्मयाजी, स्वाराज्यम् अधिगच्छति"(म०)। "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति, सर्वभूतेषु चाऽऽत्मानं, ततो न विजुगुप्सते" (उ०)। "आत्मैव ह्यात्मनो नाथः, को नाथो ह्यपरो भवेद्? आत्मना हि सुदान्तेन नाथं प्राप्नोति दुर्लभं" (बुद्धवचन, धम्मपदे)। (७०)। उद्धरेदाऽऽत्मनाऽऽत्मानं, नाऽऽत्मानम् अवसादयेत्, 'नात्मानम् अवमन्येत' इति च। "नान्य आत्मानम् उद्धरेत्"—आत्मनि एव ईदृशी 'श्रद्धा', सुतमां सात्त्विकी मता। "उत्थातव्यं, जागृतव्यं, योक्तव्यं भूति कर्मसु, भविष्यतीत्येव मनः कृत्वा, सततम् अव्यथैः" (म० भा०)। 'स्वपक्षो, सुस्थिरो भूत्वा, चलितुं शक्नुयाद् अपि, बालोऽपि, शीघ्रमेवापि'—पितरौ नित्यम् इच्छतः, 'मा माऽयमस्मत्पी, स्वाधीनो, स्वपक्षो भवेद् अयं, स्वयतो, न परप्रज्ञः शिष्यो मे उत्पस्तहायकः, न सदा सम्मुखापेक्षी'—इत्येव सद्गुरवश्च च। अयं मार्गो गुरुत्वेन, न वा, इति च विनिर्णयं, यतस्त्वमेव कुरुषे, त्वं गुरूणां गुरुः स्वयम्, इदं सत्यम्, असत्यं वा, निश्चिनोषि त्वमेव यत्, तत् त्वमेवासि सत्यानाम् अपि सत्यतमो ध्रुवं, ईश्वरोऽस्ति, न वास्ति, एतत् त्वं हि निर्णयसि दृढं यत्, ततः त्वमेवासि नूनम् ईश्वराणामपीश्वरः, परमात्मा, परेशो च, "तत् त्वम् असि" एवं निश्चितम्। न पुनस्ते शरीरं तत्, मृत्पिण्डं क्षणभङ्गुरं, किं तु सर्वशरीरेषु व्यापको, यो 'अहं' तु, चिन्मयः। ईदृशी याऽऽत्मनि श्रद्धा परमा सात्त्विकी तु सा। [१] "कामक्रोधादिषट्क" पदं 'रिपूणां'

---

१—वाल्मीकिकविना सीतारामौ यौ तु निरूपितौ, अत्युत्कृष्टतमौ मन्तौ, मानवौ तु तथापि तौ, आदर्शौ च नृनारीणां, 'प्रतिमाने महीभुजाम्', तथापि वर्जितौ नैव स्खलनात् तु क्वचित् क्वचित् मनुष्यसुलभाद्, एवं वदन्तौ स्वमनुष्यतां, अनुकार्यौ च यत्नेन यावच्छक्यं जनैः सदा, "न रावणवद् आचर्यं, आचर्यं रामवत् तथा"— इतीतिहासमर्मेशः, काव्यनिर्माणहेतवे। तुलसीदासकविना, यथा तौ अत्र चित्रितौ, विपर्यौ 'क्षति' भक्तेस्तु देवीदेवौ हि केवलं जप्यौ भज्यौ नमस्यौ च 'श्रद्धया' तु

मस्ति च अन्तर  'शमादिषट्क' तस्यापि प्रतिपक्ष , प्रमाद्, किल, 'शत्रो शत्रु', 'महामित्र' मनुष्याणा अथ आन्तर ; तत्र 'श्रद्धा' च गणिता भिन्नपन्के तु पचमी, षष्ठस्यतत्त्व'समाधान'स्यापि या नान्तरीयका,'शमो, दम , तितिक्षा, उपरम , श्रद्धा समाहिति'। (८०) आत्मन्येव हि सा श्रद्धा भवेदात्मप्रदर्शिनी, सर्वेभ्यश्चापि बंधेभ्य सर्वथा मोक्षदायिनी। यदा बाह्यान् पदार्थांश्च द्रष्टु शक्नोति मानव स्व चक्षुषैव, नान्यस्य, तदात्मान कथ ह्यमौ परस्य चक्षुषा पश्येद् ? आत्मा एव आत्मान ईक्षते। आत्मन्येव परा श्रद्धा कार्या सर्वार्थदर्शिनी ; स्वा राज्य च, स्व राज्य च,स्व श्रद्धालुभिर् आप्यते। 'आत्मदर्शन' जातानां सिद्धान्तानां प्रयोगत वर्णाश्रमव्यवस्थात्म 'स्व राज्य' सिद्ध्यति इह सत्।

हिंसा अहिंसा' विवचन

(८९) प्र० केचिद् वदति अहिंसैव सर्वत्र जयसाधन, स्वराज्य पुनरास्माय भारतीयैलर्यैव च ; अन्ये विप्रतिपद्यन्ते , कथमत्र विनिश्चय ?

उ० योगभाष्ये परामर्शो —'वचनीय विभज्य , वै (४ ३३) , एकान्त यन्त वचन अतथ्य प्रायशो ननु , यतो द्वन्द्वमयी सृष्टि , अन्योऽन्यापेक्षिणौ उभौ, सापेक्ष चापि नैकान्त,नात्यन्त,भपितु क्षम। एकान्तात्यन्ततो अहिंसा',या'महाव्रत रूपिणी,नावच्छिन्ना जाति देश कालैश्च समयैरपि (यो० सू० २ ३१), मध्या विदृत्' धरणी सा, ऽत्यन्त खलु भाविनी , यतो हिंसा विना शक्य नान्यथ प्राणधारण। (९०)। जीयमाणवस्तु आचाम्यन्ते प्रति श्वास च कोटिश , सघतनापि शाकानि भुज्यन्ते, अपि मुनिभर्ते । "चराणा अन्न अचरा , दंष्ट्रिणा अप्यदंष्ट्रिण , अहस्ताना सहस्ताश्च", हिंस्राणा चाप्यहिंस्रका (भा०),निरघमा उद्यमिना दुर्बला बलिना अपि, मृदवश्च कठोराणा, विश्वस्ताश्छलिनामपि, प्रमत्ता सावधानाना अलसाश्च तरस्विना, "क्षुधार्तो अनुधावैव, क्रूराणा चैव भीरव , फल्गूनि चापि महता, जीवो जीवस्य जीवन" (भा०)। चार्थ साधन-सम्बन्धे,'सर्वत्र' इति पद तत्र , समाचीन न भाति इव , "वचनीय विभज्य" वै। "अहिंसा परमो धर्म" इति वाक्ये

---

'श्रुति' मानया, स्मर्यौ, अर्च्यौ अत्र धन्यौ, गेयौ, चीन्त्यौ मुहुर्मुह , शरण्यै 'पात तातौ' च नियमुद्धारकारिणौ , स्वप्नेऽपि नानुकर्तु तौ शक्यौ केनचन्मानुषे , अपि चाऽन्येन देवेन देव्या वापि कथचन। (८)।

विमोहिता, केचिद् 'हिंसा' च 'दण्ड' च सङ्किरन्ति अविवेकत[1]। 'हिंसा' या सापराधाना, 'दण्ड' एव हि सा स्मृता; 'दण्डो' निरपराधाना, 'हिंसा' घोरा इति निश्चय:, "अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवाप्यदण्डयन्, अयशो महद् आप्नोति

---

[1] "ग्रामार्थं, भर्तृपिण्डार्थं, दीनानुग्रहकारणात्, वधबन्धपरिक्लेशान् कुर्वन्, पापात् प्रमुच्यते, हितार्थं तु समभ्येत्य कृत्वा, सुखमवाप्नुयात्, (सुवैद्यो गदरुग्णाना यथा वै शल्यकर्मणा); दण्ड्यांस्तु भर्त्सयन्, राजा, जनान्, पुण्यमवाप्नुयात्, गुरु सतर्जयन् शिष्यान्, भर्त्ता भृत्यजनान् स्वकान्, उन्मार्गप्रतिपन्नानां शास्ता, धर्मफल लभेत्, चिकित्सकश्च दु खानि जनयन्, हितमाप्नुयात्, एवमन्ये सुमनसो 'हिंसया' स्वर्गमाप्नुयु। रक्षणार्थाय भूतानां हन्याद् हिंस्रान् मृगान् पुन।" (म० भा० अनु० अ० २२७, २३१० १७८) "शठ प्रति शठ कुर्यात्, सादर प्रति सादरं, जिघांसन्तं जिघांसीयाद्, एष धर्म सनातन", "आततायिनमायान्तं, अपि वेदान्तपारगम्, जिघांसन्तं जिघांसीयात्, न तेन भ्रूणहा भवेत्", एता नीतिमवष्टभ्य, पाण्डवैर्गुरवो हता (शान्ति० अ० १५)। "के न हिंसन्ति जीवान् वै, लोकेऽस्मिन्, द्विजसत्तम! सुष्ठु सञ्चिन्त्यता, अत्र नास्ति कश्चिद् अहिंसक, अहिंसायास्तु विरता यतयो, द्विजसत्तम!, कुर्वन्त्येव हि ते हिंसां, यत्नात्, साऽल्पतरा भवेत्। (१०)। कृषि साध्विति मन्यते, तत्र हिंसा परा स्मृता, कर्षन्तो लाङ्गलैस्ते घ्नन्ति भूमिशयान् बहून्, जीवान् अन्यांश्च बहुश, तत्र किं प्रतिभाति ते? धान्यबीजानि यान्याहु, व्रीह्यादीनि, द्विजोत्तम!, सर्वाण्येतानि जीवा हि, तत्र किं प्रतिभाति ते? जीवा हि बहवश्चापि वृक्षेषु च फलेषु च, उदके बहवश्चापि, तत्र किं प्रतिभाति ते? ये निमेषनिपातेन हिंस्यन्ते, सन्ति तादृशा जीवा सुसूक्ष्मा बहव, तत्र किं प्रतिभाति ते? सर्वं व्याप्तम् इद, ब्रह्मन्!, प्राणिभि प्राणिजीवनै, मत्स्यै ग्रसन्ति मत्स्यांश्च जीवन्ति बहुधा, द्विजसत्तम!, प्राणिनो येऽन्यभक्षाश्च, तत्र किं प्रतिभाति ते?" (वनपर्व अ० २१२)। नूनं साधारणो धर्म, यथोक्त शान्तिपर्वणि, "सर्वे वेदा न तत् कुर्यु, सर्वे यज्ञाश्च, भारत!, सर्वतीर्थाभिषेकाश्च यत् कुर्यात् प्राणिना दया, अहिंसालक्षणो धर्मो, ह्यधर्म प्राणिना वध, तस्माद्धर्मार्थिभिर्लोके कर्त्तव्या प्राणिनां दया"। अवस्थासु विशेषासु पुनर्धर्मो विशिष्यते, धर्म्या नितान्तमेवैषा हिंसा या दण्डरूपिणी, तां विना जगतां क्षेम न स्यादेक चर्या खलु, एव बहुविचारान्ते भवन्त्यत्र विनिर्णय। (२०)।

नरकं चाधिगच्छति"। (म०) अबुद्धिपूर्विका 'हिंसा' या अनिवार्या भवेदपि, बुद्धि-पूर्वं च सद्हेतोः, 'अहिंसा' एव तु तेऽपि उभे। (१००)। "गृहे, गुरौ, अरण्ये वा, निवसन्, आत्मवान् द्विजः, न-अवेदविहितां हिंसां, आपदि अपि समाचरेत्; या वेदविहिता हिंसा नियता, ऽस्मिंश्चराचरे, अहिंसामेव तां विद्यात्; वेदाद् धर्मो हि निर्बभौ। × आततायिनं आयान्तं हन्यादेवाविचारयन्; × नाऽऽततायिवधे दोषो; ■ मन्युस्तन्मन्युमृच्छति" (म०)। समर्थ्यमन्यत्राप्यत्र, 'धर्मभेदोऽधिकारतः'। सन्यासी सर्वभूतेभ्यः ददात्यभयदक्षिणां (म०); अहिंसाऽऽत्यन्तिकी तस्य उचिता तस्मात्; ऋते तु तां, याऽबुद्धिपूर्विका च, अनिवार्या चापि, यथोदितं। आत्मत्राणायापि नायं कुर्याद् 'हिंसां' तु कस्यचित्; मैत्री, अन्-असूयकश्चापि, न्यस्तदंडो हि यतो स्मृतः। गृहस्थस्य तु धर्मोऽयं, रक्षेद् एवऽऽश्रितान् भयात्, तेषां-मभ्यवपत्त्यर्थं हन्यादेवाततायिनः। क्षत्रियस्य च राज्ञश्च धर्मोऽयं परमः स्मृत, निर्दोषाणां तु रक्षायै दुष्टानां 'हिंसनं' ऋतं। निमित्तानि भवेयुश्चेद् तादृशानि, विरोधतः, यत् कार्यसिद्धिः सम्भाव्या, शस्त्रहीनैर्, 'अहिंसया', अवश्यमेव 'अहिंसा' स्यात् तत्र धर्मः परो ननु। (११०)। केचन आशासते हिंसां उच्छेत्तुं मूलतो भुवः अहिंसायाः प्रचारेण; तथैव, ऽऽत्मसमर्पणैः हिंस्रेभ्यो, हृदयं तेषां विवर्तयितुमेव च। कदाचिदेव हिंस्रस्य भवेदीदृग् विवर्तनं; हिंसानाशस्य नऽशक्ति पृथिव्यां ननु सर्वथा। अध्यात्मशास्त्रसिद्धान्तस्तु अखण्ड्योऽयं सनातनः; 'द्वंद्वत्वमेव सर्वत्र'; तौ चान्योऽन्यमपेक्षिणौ; एकाभावे ऽपरस्यापि अभावस्तु भविता ध्रुवं। प्रलये, तु उभयाभावः; सृष्टौ, चोभयवर्तनं। 'अहिंसा परमो धर्मः'—सत्यमेतत्, न संशयः; 'हिंसा'-प्रवण-चित्तेभ्यः, किंतु एतद् उपदिश्यते, बोधस्य संभवो यत्र; न हिंस्रेभ्यः स्वभावतः। 'अहिंसा' ये प्रकृत्यैव, किमर्थं तान् इदं वदेत्, शाकआहारिमृगान्वा ऽपि, कपोतान्, गाः, शुकांश्च वा? 'हिंस्राः' वा ये प्रकृत्यैव, यथा व्याघ्रवृकादयः, तान् प्रति अपि उपदेशोऽयं व्यर्थः एवेति निश्चितं। "हिंस्राहिंस्रे, मृदुक्रूरे, धर्माधर्मौ, ऋतानृते, यद्यस्य सोऽदधात् सर्गे, तत्तस्य स्वयं आविशेत्" (म०)। दोलायते मनुष्यस्तु उभयोः द्वैधे यतः, ततः तदर्थं उपदेशोऽयं उपयुक्तो भवेत्, ननु। (१२०)। अर्थश्चास्यापरोऽस्ति, 'निर्दोषं मा वधीः' खलु; न चैवार्थोऽयं भस्य, स्यात्, 'हिंसायऽस्मानं अपि च, स्व-मांसैः आश्रितानां च मांसैर् व्याघ्रांस्तु तर्पय'; स्वदेहं एव सन्न्यासी दद्यात्, अभयदोऽखिले; न गृहस्थो; ऽथ तथापि

'क्षत्रियो' न तरां पुनः, 'दुष्टानां दण्डनं धर्मः परमः' क्षत्रियस्य वै। प्रकृतेर्द्वंद्वशीलत्वाद् भविष्यन्त्येव सर्वदा, दुष्टशिष्टौ, क्रूरमृदू, हिंस्राहिंस्रौ, वृकीमृगौ, देवदेवौ, पापपुण्ये, दण्ड्यादण्ड्यौ विरोधिनौ। 'हिंस्राणां' अपि 'अहिंसा' या, सा 'अहिंस्राणां' तु 'हिंसनं'। व्याघ्रं वै दयमानस्तु हिनस्ति शतशोऽपि गाः [1], "क्षमाबलमशक्तस्य, क्षमा शक्तस्य भूषणं, क्षमा खड्गं करे यस्य, दुर्जनः किं करिष्यति? एक एव क्षमा दोषो, द्वितीयो नोपपद्यते, यदेनं क्षमया युक्तं अशक्तं मन्यते जनः" (वा०रा०, म०भा०)। क्षमिणो हरिणान् व्याघ्राः खादन्त्येव, वृकास्तथा, क्षमाशीलान् अजान् मेषान् मनुष्या भक्षयन्ति च, ऋषयो बहवः पूर्वं, अहिंसायां तु निष्ठिताः, हिंसिता एव पापिष्ठैर् निर्दयै रावणादिभिः, शिष्टास्ततस् तपस् तेषु, यथार्थं हि रक्षसां, (१२०), भूमौ रामावतार्यं, अस्त्राणि अस्मै ददुस्तथा, स्वयं मतेन हिंसाया, मयोक्तु तानि वर्जिताः। शठा भवन्ति भूयांसो ऽशठान् खादितुं उद्यताः। ऋजुस्वभावाश्च, हृदाऽतिकोमलाः, "भवन्ति मायाविषु ये न दण्डदाः, प्रविश्य हि घ्नन्ति शठास्तथाविधान्, असंवृताङ्गान् निशिता इव इषवः" (कि०अ०)।

स्मर्यन्ति पुनरेवात्र महर्षीणां वचांसि च, "आततायिनं आयान्तं, अपि वेदान्तपारगं, गुरुं वा बालवृद्धं वा, ब्राह्मणं वा बहुश्रुतं, जिघांसन्तं जिघांसीयाद्, हन्यादेवाविचारयन्, न ततायिवधे दोषो, न तेन भ्रूणहा भवेत्" (म०,म० भा०)। महाकारुणिको रामो राक्षसान् अहनत् सन्, क्षमाया मार्जयन् दोषं अशक्तिः ख्याति कारणं—"अथ अप्रमेयं धनुः, रामो जगर्ज, गजविक्रमः, रुणध्मि सवितुर्मार्गं, भिनद्मि कुलपर्वतान्, रिणच्मि जलधेस्तोयं, विनिहन्मि दिवि सुरान्, क्षुणद्मि सर्पान् पाताले, छिनद्मि क्षणदाचरान्, यम युनज्मि कालेन, समिन्धानोऽस्त्रकौशलं, शुष्कपेषं पिनष्मि उर्वीं, अखिन्दामोऽद्यतेऽसा, (१४०), भूतिं तृणद्मि यक्षाणां, हिनस्मि इन्द्रस्य विक्रमं, भनज्मि सर्वमर्यादाः, तनच्मि व्योम विस्तृतं, न वृणे क्षान्ति लोकोऽयं मां विन्ते निष्पराक्रमं; एवं नदन्, दाशरथिर् अपृणग् धनुषा

---

[1] पारसीक कवि 'सादी', बहुभाषास्वनूदिते, 'गुलिस्तां' नामके ग्रन्थे, प्रसिद्धे 'पचतन्त्रवत्', सुष्ठु प्राह अमुं एवार्थं, पारस्या निजभाषया—'न दानिस्त, कि बद्रान् कर्द बर् मार्, कि ई जुल्मस्त बर् फ़र्जंदि आदम्, तस्यानुवाद शब्दैस्तु सस्कृतैरेव क्रियते वै—'सर्पघोते दयां कुर्वन्, न विजानाति मन्दधी, मयैवं मनुशिशौ एतद् आचरामि तु दारुणं। (४)।

दार" (भट्टि०स०६)। तत्त्वभावे तु, वैवस्वान् (तु), नीति सहनमेव हि, पापिना खलु पापाना, शक्तौ, दडन दृश्यते। नहि एक एव सर्वस्य धर्म सर्वत्र सर्वदा, अवस्थानां विशेषैस्तु धर्मोपि हि विशिष्यते। न स्यु पृथिव्या यदि ते हिंस प्रकृतिका खला, अवश्यमेव सर्वत्र शुद्धाऽहिंसा प्रचार्यता, किंतु सत्ययुगेऽप्यासन् दैत्या केचन हिंसका, विष्णुनाऽतोऽवतीर्य ते 'हिंसिता' ('दडिता') धर्म्यहिंसया (दडन)। प्रह्लाद सदृशा मौर्य, नृसिंह केन वार्यते? बालानपि अर्दितान् दृष्ट्वा दुष्टैर्निर्दयदारुणै, कातरा भीरवश्चापि, तथा सात्ततमा अपि, रौद्रेण हि समाविष्टा रुद्रवैवतमन्युना, नृत्संहारिणो नून मरा सिंहा भवन्ति वै, शस्त्राभावे, नखैर्दन्तैर्दुर्दान् व्यापादयन्ति च। "जायते भगवान् रुद्र = पापिनां नाशनाय हि, यत्र खला प्रपीड्यन्ते सबलैर्निर्दयैरपि। (१५०)। हिंसाऽत्यत भवेद् त्याज्या यदा याति, यैं, सदा, अहिंसाऽत्यतिकी चोप्या कैश्चिद् नून भवेत् तदा, उभावपि मध्यमत्वतो मध्यवृत्ति गमिष्यत, दडरूपिणी एव हिंसा तदा शिष्टा भविष्यति, अहिंसाऽन्यत्र सर्वत्र जनता प्रभविष्यति। एतेनापि प्रसगेन, सुधकारा प्रवर्तते, विना वर्णाश्रमव्यूह, भ्रान्तिर्भ्रमे पदे पदे, न च सिध्येद् असौ व्यूह: धर्मेणिवा आमदर्शन। सस्कृतहेतु विद्वत्सु सर्वमेतत्तु विस्मृत। 'सर्वेषां व्यवहाराणां, गार्हस्थ्याश्रमवर्तिनां, अथ किं, राजधर्माणां, रक्षाया अपि कर्मणा, सांसारिकाणां सकलजीवनस्योपयोगिना, विरोधिनी एवाऽत्मविद्या, न त्वेषा सा विरोधिनी'—इत्येव भ्रान्तिर् एतर्हि घोरा तेषु उपचीयते। विरक्ता सर्व कृत्येषु, न विरक्तास्तु भोजने, अकृत्येष्वपि चाऽसक्ता, शारीरेषु सुखेष्वपि, दया वेदान्तिनम्मन्या प्रायशो साधुनामता। घोराऽपकरणी भ्रान्ति सहार्या इय प्रयत्नत, यदि मानव धर्मस्य भवेद् उद्धार ईप्सित। गुह्यो य "अक्षरो वेद, स विदिर्दैव वेदविद्, (१६०), तद्विद्याया प्रचारेण, प्रयोगेण च जीवने, दैवसिके चापि तथा (य प्रातिस्विक दृश्यते), सामाजिकेऽपि तद्वत्त (य सार्वस्विक उच्यते), भारते द्वार आरम्भ्य, पुन सस्करण तथा धर्मस्य, च समाजस्य, पुनश्च नवजीवन, सत् स्व-राज्यस्य ससिद्धि", पुन स्वा-राज्यमेव च।

(३०) प्र० किं 'आर्यसस्कृतेर्' आद्य हिन्दुभिर् न अभिमानिभि? किं रक्षा ऽस्या न कर्तव्या सर्वप्राणेन हिन्दुभि? अन्यसस्कृत्याक्रमेभ्यो रक्षणीयाऽस्ति सा न किं?

उ० अवश्यं रक्षणीया सा या भवेद् 'आर्यसंस्कृतिः'; किंतु अस्य शब्दस्यार्थः कः ? पूर्वं निर्धार्यतां इदं । एकप्रकारकं वस्त्रं, भाषा वा एकप्रकारिका, भोज्याद्य-मेकं किंचिद्वा, रीतिः पक्तेस्तु वा पुनः,अभिवादनरीतिर्वा काऽप्येका, गृहनिर्मितिः, वेष-भूषा, तथा काचित्, सामग्री संगरस्य वाऽप्यस्त्रशस्त्रात्मिका काचित्, शास्त्रं यत् किंचिदेव वा, दायभागस्य वा रीतिर्, आचारस्यापि कस्यचित्—नैतत् किमपि पर्याप्तं लक्षणं हि 'आर्यसंस्कृतेः' । भारते ह्येव, देशेषु, कालेषु, विवि-धेषु वै, पदे पदे विभिद्यते सर्वे ते ; मात्र संशयः भेदानां भूयसां एषां, कः स्याद् रक्ष्यो, न च इतरे ? सर्वः स्वां एव रीतिं तु विशिष्टां मन्यते तमां ! (१००) ।

सा च रीतिर् विभर्त्येव रूपं, वर्षैर्, नवं नवं । 'न भारताद् बहिर्यानं' 'न समुद्रस्य लंघनं'—इत्यप्यासीत् कियत्कालं लक्षणं ह्यार्यसंस्कृतेः ; वाराणस्यां, तथाऽन्यासु महीषु नगर्यामपि, पंचाशद्वर्षपूर्वं तु, स्व-स्व-ज्ञातेर्बहिष्कृताः बहवः सज्जनाः, ये हि कूपमंडूकतां जहुः, उत्साहेनान्यदेशांश्च विलंघ्योदधिं ईयसुः ; साम्प्रतं खलु असौ वायुः सुतरां परिवर्तितः, पंडितः कोऽपि नेदानीं अधियात्रां चिनिन्दति ; प्राचीनान् , प्रत्युत, उद्धृत्य ग्रन्थाद्, द्वीपव्रजाय च, वार्तायै, जल-धौ यानं, धर्मसंचारणाय च, पुरा वै, भारतीयानां, वर्णयन्तीह सर्वतः;यदस्ति 'वेदे-ष्वप्यस्ति तुग्र-भुज्यु-कथा', तथा, समुद्र-ग-वहित्राणां निर्माणस्य कलामपि सोल्लासं दर्शयंत्यद्य मान्यग्रन्थेषु तु शिक्षितां ; वारिध्युत्तरणं ह्येवं साम्प्रतं तु 'आर्यसंस्कृतिः'! 'आर्यस्य' लक्षणं पूर्वं उक्तं अत्र पुनः पुनः; यत् तादृशानां चरितं, तदेवास्ति 'आर्य-संस्कृतिः'; न क्षुल्लकाः विशेषास्तु वसन-अशन-रीतिषु । न 'रेलो' वा, न 'तारो' वा,न वा पुस्तक'मुद्रणं',न'घडी',न च 'साइकल्'वा,न'मिल्'-निर्मितकर्पटं, न 'स्टीमरो', न वापि एरोप्लेनो, नैवापि 'रेडियो', न विद्युद्व्यजनं वापि, न विद्युद्दीपकं तथा, न 'वाटरवर्क्स'-यंत्राणि, 'पोस्ट' रीतिस्तथैव च, न ईदृशि बहु वस्तूनि प्राक्काले भारतेऽभवन्, व्यापकानि देशे सर्वस्मिन् , सर्वेषां सुलभानि च ; तिरस्कार्याणि किं तस्मात् ,नोपयोज्यानि वाऽधुना ? पुन: स्मर्यं प्रसङ्गेऽस्मिन् वाक्यं भगवतो मनोः, "स्त्रियो, रत्नानि, अथो विद्याः, धर्माः, शौचं, सुभाषितं, विविधानि च शिल्पानि समादेयानि सर्वतः; श्रद्दधानः शुभां विद्यां आददीतावराद् अपि, अन्त्याद् अपि परं धर्मं, स्त्रीरत्नं दुष्कुलाद् अपि, विषाद् अपि अमृतं ग्राह्यं, बालाद् अपि सुभाषितं, अमित्राद् अपि सद्वृत्तं, अमेध्याद् अपि काञ्चनं" (म०) । ईदृशेन-

ऽार्यभावेन संस्कार सस्कृतेरपि, कार्यो, नवनवोत्कर्षप्राप्तये तु, पुन पुन , एष स्व राज्यसार्थक्यं, स्वा राज्येन च तुल्यता। दृश्यते अत्र केचित्, स्व दौर्बल्यस्य च्छादका, "अशक्तास्तत्पद गन्तु ततो निन्दा प्रकुर्वते", (१८०), इतिन्यायानुसारेण, महिमाकांक्षिणो मृषा, मत्सरव्याप्तचित्ताश्चापि, भ्रष्टा कालगतेस्तथा—'आविष्कारा तिरस्कार्या पाश्चात्यानां तु सर्वथा, तर्पका इन्द्रियाणां ते, धर्म आत्मास्तु मह्याणि, उपज्ञास्तु विनिन्द्यामो नरमहारकारिका, विलासपोषिकाश्चापि, व्यभिचारादिवर्धका'। एव ये हि विनिन्दन्ति पाश्चात्य सर्वजीवन, धर्मध्वजास्ते स्वपाश्च चिनदस्तुतिभिर्बहु प्रशसन्ति विमान तु पुष्पक रामवाहन, कृष्णस्य गरुडस्यापि, सौभ सात्वस्य चैव वै, काशांस्त्रानि तथाऽस्त्राणि, सूर्यकान्त मणिं च, य सत्राजित प्रदात् स्वर्णभारान् अष्टौ दिने दिने, युधिष्ठिर सभा चापि मयासुर विनिर्मिता, महाश्चर्यमयी, रत्नै पूर्णा, मतैस्तथाऽद्भुतै, मत्राय 'देवा' प्रददु जलान्नुत्पादन वर, इच्छया, चाप्यदृश्यत्व—तमव च प्रशस्यते, 'योगारूढे' 'विमुक्ते' चाप्येतैर्धर्मध्वजैरहो 'स्तुत्य यदेव पूर्वेषु भारतीयेष्वभूत्, ननु, गर्हणीय तदेवास्ति यूरोपीयेषु साम्प्रत'। 'अशक्तास्त तत्पद गन्तु ततो निन्दा प्रकुर्वते'। मिथ्याऽहकारजातोऽय भ्रम एव हि केवल। पाण्डवै, कौरवैश्चापि, यादवैश्च न कि कृत तर्पण चेन्द्रियाणां वै, नाशनं च परस्पर? (१९०) निष्कर्षोऽस्य तु सर्वस्य विचारस्यैष एव हि—न विश्वास, न चोपेक्षा, निन्दनीया स्वस्त, खलु, भूते वा, वर्तमाने वा, भविष्ये काले एव वा, आत्मना दुष्प्रयोगस्तु जनतापीडनाय च, गर्ह्य सदा, तथा लिप्तो दम्भो, वृद्धेषु जम्भन।[1] समावर्तनसंस्कारे शास्ति स्नातक गुरु, पुरा, "ऽस्माक तु यान्येव चरितानि शुभानि वै, अनुकार्याणि तान्येव, न इतराणि कदाचन (तै० उ०)। (१९५, आदित ४५५० श्लोका)।

---

[1] भूयसी संस्कृतज्ञेषु प्रवृत्तिर्दृश्यतेऽधुना—या याऽस्माकं प्रशसा सा सा निन्दा वर्तेत विना, या यूरोपीयनिन्दा सा चष्या रस्या चिराय च, अवधीर्य वर्णनीय अस्मद् दोषप्रदर्शनं, तथैव यूरोपीयाना किञ्चिच्च गुणवर्णनं, यूरोपीयो हि य कश्चिद् रीतिं कामपि भारतीं प्रशसति किमपि, एव यौरोपी गर्हते यथा, हृदयो हृदयेन तो आलिङ्गय सद्य एव हि, स्वन प्रमाणश्रुतिवद् घोष्य धार्य तथाऽस्य च, प्रत्यक्ष अपि दुष्टस्य आचारस्यास्माकमेव हि, शब्दैर्मृदुतरैश्चापि, बुद्ध्या सात्त्विकया तथा, गोपनस्येच्छया



## १८ अध्याय

### प्रणव-व्याख्या।

( ३० ) प्र० ॐ कारः त्र्यक्षरश्चापि, तथैव एकाक्षरोऽपि मः, इत्युक्तं मनुना; एतच्च—"यस्तं वेद स वेदवित्" ( म० ); नामानि चास्य पठ्यन्ते—'तारकं', 'सर्वविन्मतिः', 'तारः', 'सर्वज्ञताबीजं', 'उद्गीथः', 'प्रणवः', तथा 'प्रातिभं' च, इति; तत्सर्वं सम्यक् अन्वीयते कथं ?

उ०—"ज्ञानं, एकक्षणआरूढं, अक्रमं तु, विवेकजं", यस्य "ज्ञानस्य ध्यानन्याज् ज्ञेयं भव्यं" 'इदं' तु यत् ( यो० सू० )। "सकृत्-प्रभातं" (उ०), 'प्रतिभाति' यत् सकृत्, तदिदं यथा, सर्व-विकाश-कारणं; तमोमयाज्ञान-महांध-

---

चैव,दोष यो दर्शयेत् खलु, उपेक्षणीयोऽथवा सः स्यात्, तिरस्कार्योऽथवा मूर्खः। यूरोपीयो लिपेश्चेदं—'लिपिज्ञानं न पाणिनेः पूर्वं अनाभवत्'—स्वस्यावमानं मन्यते तु तत् (लिखनं) संस्कृतानि ; तथा तस्य यतन्ते खंडनाय ते ; व्यासः पंचसहस्राब्दपूर्वं तु यद् अलेखयत्, लक्षश्लोकात्मकं काव्यं महाभारतमेव हि,शतं श्लोकान् प्रतिदिनं, त्रिभिर्वर्षैः समापयत्, गणेशेनैव—तस्मात् प्रमाणं दर्शयंत्यपि। पाश्चात्यश्चेद् वदेदेवं—'श्रवणं स्मरणं वरं, कयाऽपि लिप्या लिखनात्, पुस्तकानां च संचयात्; (१०); पुस्तकाश्रयिता यस्माल् लिखनात्तु विवर्धते, भवत्यपि स्मृतेर्नाशः, सच्छिक्षाज्ञानयोरपि, अथता जायते ध्याने, मावधानं न पठने'—प्रफुल्लास्ते तदा भूयो हृष्टाः गायन्ति गर्वतः—'अस्माकं इयं एवाऽसीद् रीतिर् अध्यापने सदा, कंठस्थाः एव ग्रन्थाश्च, पद्येश्चापि विनिर्मिताः, कंठस्थीकरणस्यैव सौकर्याय पुरा ननु, पुस्तकस्था तु या विद्या, परहस्तगतं धनं, कार्यकाले तु सम्प्राप्ते, न सा विद्या न तद् धनं'।—सत्यं एतत्; परन्तु अर्ध-सत्यं,पूर्णं न तत्तु. किमर्थं 'लेखयामास' गणेशेन तु भारतं व्यासः? कस्माल्'लिलेखापि' गुणाढ्यस्तु बृहत्कथां? गणेन लिखिता सन्ति ग्रन्थाः ये तु सहस्रशः सर्वशास्त्रेषु, तान् एते जल्पकाः विस्मरंति वै, षण्णां दर्शनसूत्राणां, तथा व्याकरणस्य च, भाष्याणि लिखितान्येव, गद्येनापि, न पद्यतः। अस्ति कोऽपि मनुष्यो यः स्मृतौ धारयितुं क्षमः, सर्वान् मुख्यान् अपि ग्रंथान् शास्त्रस्य शतवर्त्मनः? गृध्नुना स्वप्रशंसायाः बुद्धिरेषा तु न स्थिरा, न विवेचननिष्ठा वा, सिद्धान्तग्राहिणी न च; (२०); एकस्मिन्नेव भावे [illegible] सुस्थिरा सर्वदाऽपि सा

कारत सधश्च यत्तारयतीति "तारकं"। सगृह्यतेऽस्मिन् अखिल च 'दृश्य', मयैव 'द्रष्टा'ऽपि, अथ 'दर्शन च,क्रम विना, एकक्षणे एव सर्वं, सदा च, तस्माद् इद 'अक्रम च। "क्रम त्रय समाश्रय व्यतिक्रमेण या, सतत, क्रम त्रितय लंघन विदधती विभाति उच्चकै, क्रमकवपुः, अक्रम प्रकृतिरेव, या शोभते, करोमि हृदि ता अह, भगवतीं परा सविद्" ( काश्मीर शैवग्रन्थीय-'शिवसूत्रविमर्शिनी' टीकाया 'ज्ञानगर्भ 'श्लोक )। 'अह एतत् न' इति सवित्, 'अहम्' च 'इदम्' तथा, 'न' कार रूपिणा एव इह विवेकेन विविच्य च, समाहरन्ती श्रीन् एतान् अपि एकत्र, 'त्रि वि क्रमा', सहरन्ती, निषेधन्ती, लघयन्ती विना क्रम, एकेनैव क्रमेण इव, 'अक्रमा', सार्वकालिकी, भूत भवद् भविष्यच्च च त्रय, युगपद् एव हि, एकेन 'अनवरत' ज्ञानेन आवृणोत्येव सर्वदा। सर्वं 'त्रि अन्तर्गत' ज्ञान, अस्माद् ॐ "सर्वविन्मति"। ( १० )। 'विवेकख्यातिर्' अप्येषा एव 'आत्मा

---

'स्तुत्य एवास्ति यत् किंचिद् वदामि च करोमि च। विशेषज्ञो विवेकी च विद्वान्, सर्वत्र सार वित् गुणकश्चापि दोषज्ञ, सर्वत्र 'अति' तु वर्जयन्, न दर्पी, न तिरस्कारी, न पर ग्रह एव वा मैत्रे साथ परामृश्य, मन्वादिष्ट करोति यै, 'स्त्रियो, रत्नानि, अथो विद्या, धर्मो, शौच, सुभाषि, विविधानि च शिल्पानि, समादेयानि सर्वत'"। स्मृतरपि लिपेरप्यस्त्यस्माक तु प्रयोजन स्मृतावपि गुणा सन्ति, दोषा सन्ति लिपा यपि, लिपावपि गुणा सन्ति दोषा सन्ति स्मृतावपि यत्नेय दोषदम्भ स्यात्, तत्रैव तु विरम्यता। लिपेर्दूषयितारो हि स्वय सवयकारिण प्रत्यक्षो लिपिवद्धाना लिपि दोषान् लिखन्ति'। सर्वत्रैव गुणा सन्ति, दोषा सर्वत्र चैव हि त्याज्य दोषवद् ग्राह्य अपि ग्राह्य गुणावद् एव च,' नात्यन्त गुणवत् किंचित्, नात्यन्त दोषवत् तथा"। गुणोऽपि त्यज्यते जातु दोषभीत्यैव चेद् यदि, प्रतिप्रसवमार्गेण प्रलये स्यात् स्थितिर्नतु, (३०), सर्वोऽपि व्यवहारो न सदा स्वभ स्वस्मात्तुपात, "शाल्यो नाधिरोप्येरन् मृगा सन्तीतिभीयया ह्यन्यत्र नाधियोजेरन्, भिक्षुकाणा भयन च" (भामती), "यतो यतो निवर्तते, ततस्ततो विमुच्यते, निवर्तनाद् हि सर्वतो, न वेत्ति दु ख अणु अपि" (सचे० शारी०)। केवल निन्द्याऽन्वैषा, केवलऽशसाभया, न हि उत्कर्ष समाजस्य, धर्मस्य च भवेत् तु न, "दृष्टो ईर्ष्येत्, फल्गो नेर्ष्येत्" (न०), गुहीयात् सर्वतो गुणान् दश्य ता आत्मनो दोषा, शोध्यन्ता च प्रयत्नत, उत्कर्षस्तु एवमस्माक भविष्यति नतु ध्रुव। (३४)।



## १८ अध्याय

प्रणव व्याख्या ।

( ३० ) प्र० ॐ कार त्र्यक्षरश्चापि, तथैव एकाक्षरोऽपि सः, इत्युक्तं मनुना; एतच्च—"यस्तं वेद स वेदवित्" ( म० ) , नामानि चास्य पठ्यन्ते—'तारकं', 'सर्वविन्मसि ', 'तार ', 'सर्वज्ञताबीज', 'उद्गीथ ', 'प्रणव ', तथा 'प्रातिभ'श्च, इति, ममर्तं सम अर्थायते कथं ?

उ०—"ज्ञान, एकक्षणारूढ, अक्रम तु, विवेकजं", यस्य "ज्ञानस्य ध्यानभ्याज् ज्ञेय अल्प ' 'इदं' तु यत् ( यो० सू० ) । "सकृत् प्रभात" (उ०), 'प्रतिभाति' यत् सकृत्, तडिद् यथा, सर्वं धिकाश-कारणं , तमोमयाज्ञान-महाध-

धैव,दोष यो दर्शयत् खलु, उपक्षणीयोऽथवास स्यात्,तिरस्कार्याऽथवा भृशं । यूरोपीयो लिखे चेद्दे—'लिपिज्ञान न पाणिन पूर्वं अनाभवत्'—स्वस्यावमान मन्यते तु तत् (लिखन) संस्कृताशे , तथा तस्य यतन्ते राडनाथ [illegible] , व्यास पञ्चसहस्राब्दपूर्वं तु यद् अलेखयत्, लक्षश्लोकात्मक काव्य महाभारतमेव हि,शत श्लोकान् प्रतिदिन, त्रिभिर्वर्षैं समापयन्, गणेशेनैव-तच्चात्र प्रमाण दर्शयस्यपि । पाश्चात्यश्चेद् वदेदेव—'श्रवण स्मरण वर, कयाऽपि लिप्या लिखनात् , पुस्तकाना च सञ्चयात्, (१०), पुस्तकाश्रयिता यस्माल् लिखनात्तु विवर्धते, भवत्यपि स्मृतेर्ह्रास , सच्छिक्षाज्ञानयोरपि, अल्पता जायते ध्याने, सावधान न पठ्यते'—प्रफुल्लास्ते तदा भूयो हृष्टा गायन्ति गर्वत —'अस्माकं ह्य एवऽासीद् रीतिर् अध्यापने सदा, कठस्था एव ग्रन्थाश्च, पद्येष्वापि विनिर्मिता , कठस्थीकरणस्यैव सौकर्याय पुरा ननु, पुस्तकस्था तु या विद्या, परहस्तगत धन, कार्यकाले [illegible] सम्प्राप्ते, न सा विद्या न तद् धन' ।—सत्यं एतत् , परं तु अर्ध-सत्य,पूर्णं न तत्तु किमर्थं 'लेखयामास' गणेशेन [illegible] भारत व्यास ? कस्मात् 'लिलेखापि' गुणाढ्यस्तु बृहत्कथा ? ग्रन्थ लिखिता सन्ति ग्रन्थाः य तु सहस्रश सर्वशास्त्रेषु, तान् एते जल्पका विस्मरति वै, पश्या दर्शनशास्त्राणां, तथा व्याकरणस्य च, भाष्याणि लिखितान्यव, गद्यनापि, न पद्यत । अस्ति कोऽपि मनुष्यो य स्मृतौ धारयितु क्षम , सर्वान् मुख्यान् अपि ग्रन्थान् शास्त्रस्य शतवर्मन ? गृध्नुना स्वप्रशसाया बुद्धिरेषा [illegible] न स्थिरा, न विवेचननिष्ठा वा, सिद्धान्तग्राहिणी न च, (२०); एकस्मिन्नेव भावे [illegible] सुस्थिरा सर्वदाऽपि सा

कारत सदश्च यत्तारयतीति "तारकं"। सगृह्यतेऽस्मिन् अखिल च 'दृश्य', तथैव 'द्रष्टा'ऽपि, अथ 'दर्शन च,क्रम विना, एकक्षणे एव सर्वं, सदा च, तस्माद् इद 'अक्रम' च । "क्रम त्रय समाश्रय व्यतिक्रमेण या, सततं, क्रम त्रितय लघन विदधती विभाति उदके, क्रमैकवपुर, अक्रम प्रकृतिरेव, या शोभते, करोमि हृदि ता अह, भगवतीं परां सविद" ( काश्मीर शैवतन्त्रीय 'शिवसूत्रविमर्शिनी'- टीकाया 'ज्ञानगर्भ-'श्लोक )। 'अह एतत् न' इति सवित्, 'अहम' च 'इदम' तथा, 'न' कार रूपिणा एव इह विवेकेन विविच्य च, समाहरन्ती त्रीन् एतान् अपि एकत्र, 'त्रि त्रि क्रमा', सहरन्ती, निषेधन्ती, लययन्ती विना क्रम, एकेनैव क्रमेण इव, 'अक्रमा', सार्वकालिकी, भूत-भवद्-भविष्यच् च यत्र, युगपद् एव हि, एकेन 'अनवरत' ज्ञानेन आवृणोत्येव सर्वदा । सर्वं 'त्रि अन्तर्गत' ज्ञान , अस्माद् ॐ "सर्वविन्मति " । ( १० ) । 'विवेकख्यातिर्' अप्येषा एव 'आत्मा-

---

'स्तुत्य एवास्ति यत् किंचिद् वदामि च करोमि च । विशेषज्ञो विवेकी च विद्वान्, सर्वत्र सार-वित्, गुणतश्चापि दोषत , सर्वत्र 'अति' तु वर्जयन् ,न दर्पी, न तिरस्कारी, न पर प्रश्न एव वा मैत्रे साधं परामृश्य, मन्वादिष्ट करोति यै, 'स्त्रियो, रत्नानि, अथो विद्या , धर्मो , शौच, सुभाषि , विविधानि च शिल्पानि, समादेयानि सर्वत '' । स्मृतावपि लिपेरप्यस्त्यस्माक तु प्रयोजन, स्मृतावपि गुणा सन्ति, दोषा सन्ति लिपा- यपि, लिपावपि गुणा सन्ति, दोषा सन्ति स्मृतावपि, यत्रैव दोषारम्भ स्यात् तत्रैव तु विरम्यतां । लिपदूषयितारो हि स्वय सत्त्वकारिण ग्रन्थानां लिपिवदाना, लिपि दोषान् 'लिखन्ति' च । सर्वत्रैव गुणा सन्ति, दोषा सर्वत्र चैव हि त्याज्य दोषवद् एव अपि ग्राह्य गुणवद् एव च;'' "नात्यन्त गुणवत् किंचिन्, नात्यन्त दोषवत् तथा" । गुणोऽपि त्यज्यते चातु दोषभीत्यैव चेद् यदि, प्रतिप्रसवमार्गेण प्रलये स्यात् स्थितिर्ननु, (२०) सर्वोऽपि व्यवहारेण मत्र लम्भ समाप्नुयात् , "स्थाल्यो नाधिरोप्येरन् मृगा सन्तीतिभीयया, स्थान्यथ नाधिश्रीयेरन्, भिक्षुवाणां भयेन च" (भामती), "यतो यतो निवर्तते, ततस्ततो विमुच्यन, निवर्तनाद् हि सर्वतो, न वेत्ति दु ख अणु अपि"(सत्त्वे० शारी०) । चेत्त निन्दयाऽन्येषा, केवलश्च मप्रशसया, न हि चत्कर्ष समारम्भ,धर्मस्य च भवेत् तु न ,"दंतं ईर्ष्येत्, फले नेर्ष्येत्" (च०), गृहीयात् सर्वतो गुणान्, हसन्तो आत्मनो दोषा ,शोध्यन्तां च प्रयत्नत ,उत्कर्षस्तु एवमस्माक भविष्यति ननु ध्रुव । (३५)।

नाऽऽत्मविवेकत ', सा एव 'सत्त्व पुरुषयोर्' 'अन्यता ख्यातिर्' उच्यते, 'सत्त्व' इत्यत्र सङ्केतो 'दृश्यस्य' सकलस्य वै। प्रणवस्य एकाक्षरत्व, त्र्यक्षरत्व तथैव, च्यन्, तथैव सर्वा व्याख्या इय साङ्ख्य-योगेषु सूचिता, तथा च न्यायसूत्रेषु वेदान्तेषु विशेषत, माण्डूक्योपनिषन्मन्त्र-गोपथब्राह्मणादिषु। 'न क्षरति' कदाप्यन्ते, 'अह' च, 'एतच्' चापि, 'न' इति च, त्रयोऽपि अ-कारेण, उ कारेण म-कारेण सूचिता, 'अक्षराणां' त्रयेण, एते त्रय एव 'अक्षरा.' स्मृता, समाहताश्चापि सर्वे एतस्मिन् 'परमाक्षरे', ॐ इति एकाक्षरेण उक्ते 'ब्रह्मणि' एव 'परात्मनि'।

किंतु एतत्सर्वमप्युक्त, न बुद्धि अधिरोहति, मुमुक्षुत्व युयुक्षुत्व यावत् नोत्पद्यते हृदि, 'अस्मिता अभिनिवेशाश्च यावद् यान्ति न तानव, शान्ति दान्ति आदि षट् सम्पद् यावन् न उदेति भूयसी, सर्वभूतहितेहा च यावन् नास्ति गरीयसी, वैराग्य सात्त्विक चापि, न तु राजस-तामस, परकम्पाऽनुकम्पा हि, परतु दातुं इच्छिता, लक्षण, समवेदित्व, स्वार्थाहङ्कार विच्युते, (२०), 'अहमेव पवित्रोऽस्मि, नान्ये केचित् क्वचित् पुन', 'अहमेवाभिजनवान्, कोऽन्योऽस्ति सदृशो मया', 'मोक्षार्हश्चाहमेवास्मि योग साधयितु क्षम', 'नान्यैर्वराकै अस्पृश्यै कार्यं मेऽस्ति इतरैर्जनै', 'धर्मस्य कर्णौ पूर्वेतो प्रभुणा जनुनाऽन्यथा, यदि श्रय शृणुमान्त्र अजुद्धयाऽपि तु वैदिक'—भावा एतादृशा इमा रुन्धते हृदय यदा, अहङ्कारेणाऽऽवृते तस्मिन् 'सार' बोधो विशेत् कथं ? ' यो मां प्रयतते हन्तु, मोक्षं आश्रित्य, पण्डित, तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च, अवध्य सर्वभूतानां अहं एक सनातन " (म० भा० अश्व० १३), एव वदति कामोऽय, 'अविद्याऽस्मितयो' पिता, पति, पुत्रस्तथैव, अपि 'भ्राता', तच्छत्रुरेव च। काम जेतुं काम एव, भूत्वा निष्काम कामना, जेतु आत्मान आत्मैव, भूत्वा सर्वात्मभावना, शक्नोति, नान्य, कुत्रापि, कश्चनापि, कथचन। न केवल स्वय मोक्तु, अपि मोचयितु परान्, न केवल स्वय योक्तु, अपि योजयितु परान्, अहङ्कारं तु विस्मृत्य, यो यतेत स बोधभाक्। "विवेक वैराग्यवतो हि एव बोधमहोदय" (बो० सा०)। प्रातिस्विक 'इमा' अच्छन्न यावत् स्याद् हृदय, नहि सार्वस्विकस्य-ऽ'हम' तु प्रवेश परमात्मन। (२०)। अहङ्कारे विगलिते भेद-बुद्ध्यधिकारिणि, हि उदेति अभेद बोधोऽय परमात्मा स्वय ध्रुवम्। प्रणवस्य जपश्चापि, तस्य चैवार्थभावन, कृत शुद्धेन वपुषा, तथा शुद्धेन चेतसा, स्मृतो योगेषु विविध-बहु कल्याणकारक।

ब्रह्मणः प्रकृतेः रूपं, महाभूतं यद् आदिमं आकाशं हि, गुणस्तस्य शब्दो-ऽयं प्रणवध्वनिः, "सृष्ट्यादौ ब्रह्मणः कण्ठं भित्त्वा यस्माद् विनिर्गतौ, ॐकारश्च', 'अथ'शब्दश्च,तस्मान्माङ्गलिकौ उभौ', विभेदैः पुनरस्यैव सर्वे शब्दा भवन्ति हि, "समाहितात्मनो हि आदौ ब्रह्मणः परमेष्ठिनः, हृदि आकाशाद् अभून्नादो, वृत्तिरोधाद् विभाव्यते, यदुपासनया नूनं योगिनो मलं आत्मनः, द्रव्य क्रिया कारकाख्यं, धूत्वा यान्ति अपुनर्भवं। ततोऽभूत् त्रिवृद् ओंकारः, योऽव्यक्तप्रभवः, स्वराट्, यत् तत् लिङ्गं भगवतो ब्रह्मणः परमात्मनः। शृणोति य इमं स्फोटं, सुप्तश्रोत्रे च, शून्यदृग्, येन वाग् व्यज्यते, यस्य व्यक्तिर् आकाश आत्मनः, स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः, स सर्वमन्त्रोपनिषद्वीजं वेदं सनातनं। (४०)। तस्य हि आसँस्त्रयो वर्णा अकाराद्या, भृगूद्वह', धार्यन्ते यैस्त्रयो भावा गुण नाम अर्थवृत्तयः, ततोऽक्षरसमाम्नायं असृजद् भगवान् अजः, अन्तस्थ ऊष्म स्वर स्पर्श ह्रस्व दीर्घ आदिलक्षणं, तेनासौ चतुरो वेदान्, चतुर्भिर्वदनैः प्रभुः"(भा०स्क०१२अ०६०)। ॐ अतो नाम,रूपं च, नैकिष्ठं परमात्मनः।

सर्वेऽपां सर्वभावाश्च पाडमयस्याखिलस्य च अपि,अतो हि निहिताश्चाखिलं, वेदमूलं ततो ह्यय, "वाच्यर्था नियताः सर्वे,वाङ्मूलाः, वाग्विनिःसृताः, तस्मात् य स्तेनयेद् वाचं, स सर्वस्तेयकृन् नरः" (म०)। सत्ता विशेषा हि यथा सत्ता सामान्ये आहिताः, यथा 'अहं अस्मि' इति बोधः 'सामान्ये', अन्यास्तु मतिः, यथा तु बीजे 'सामान्ये' 'विशेषाः' पल्लवादयः, यथा च बिन्दौ, आकाराः, रेखा, गोलाद्योऽखिलाः, 'तथैव बुद्धितत्त्वस्य आक्षेपार्थी बहु, प्रत्ययाः 'वैशेषिकाः', तथा शब्दाः तत्तत्प्रत्ययवाचकाः, अशेषाः, शब्द 'सामान्ये' प्रणवे निहिताः सदा। संयोजकं हि सामान्यं,विशेषो हि विभाजकः, सग्राहकं तु सामान्यं, अन्यो विग्राहकः परः, सादृश्यं खलु सामान्यं, वैदृश्यं अपरस्तथा, (५०), सत्कारं बीजं सामान्यं, विशेषस्तु विकारकः, अंकुर-स्तम्भ विटप पत्र पुष्प फलात्मकः, सर्वे विशेषाः सामान्ये प्रलीनाः समवायतः, "सामान्यं एकत्वकरं, विशेषस्तु पृथक्त्वकृत्, तुल्यार्थता हि सामान्यं, विशेषस्तु विपर्ययः, सर्वदा सर्वभावानां सामान्यं वृद्धिकारणं, ह्रासहेतुर्विशेषश्च, प्रवृत्तिरुभयस्य तु" (चरक०)। प्राणायाम-सहायोऽस्तो जपोऽस्य अयुर्विवर्धनः,'शिरो व्रतादि' चयानां साधकः, दिव्य शक्तिकृत्। अनुबद्धदेहचिन्तेन कृतो, दोषकरो मतः, दुर्बुद्धिः, रोग,

उन्माद, मृत्यु च जनयेद् असौ। 'आ ह एव स नखाग्रेभ्य परम तप्यते तप, य स्रग्वी अपि द्विजोऽधीते स्व ध्याय शक्तितो ऽन्वह" (म०), "प्रणवादि पवित्राणा जप स्वाध्याय" उच्यते, शब्दोच्चारणमात्र न, "जपस्तदर्थभावन" (यो०सू०भा०)। 'अधिक यद्यद्'इष्ट स्याद्,यद्यत्नेन तद् ईयते',बुध्यते,लभ्यते चैव, तद्धि एव 'अध्ययन स्मृत। (६०)। धर्मश्चार्थश्च कामश्च, त्रिवर्गो 'ऽभ्युदया' त्मक, परम पुरुषस्यार्थ परमात्मेति उदाहृत, नास्ति श्रेय पर यस्मात् तच्च 'नि श्रेयस,' तथा, यद्यत्नेन'अधिगम्येत,'तद्धि एव'अध्ययन' स्मृत। सवशास्त्राणा तु सर्वेषा इयमेव परा गति, साफल्य, परम लक्ष्य, यच् चतुष्टयसाधने। सर्व 'अध्ययन', 'स्वस्य', स्व रूपस्य, परात्मन, जीवात्मनश्च, ज्ञानाय, अनुभवाय, प्रशसते स्वस्यैवाध्ययने, ज्ञान, 'स्वाध्याय' इति कथ्यते। 'स्वे' मज्ञाते च विज्ञाते, सामान्येन, विशेषत, जगद् भवति सुज्ञात अखिल तत्त्वतो,यत। ज्ञानस्य, अनुभवस्यापि, तत्र गातासु गीयते—"अमानित्व अदम्भित्वं, अहिंसा, क्षान्तिर्, आर्जव, अध्यात्मज्ञाननित्यत्व, तत्त्वज्ञानार्थदर्शन, एतत् 'ज्ञान' इति प्राहु, 'अज्ञान' यद् अतो ऽन्यथा,× स्वाध्यायाभ्यसन चैव वाङ्मय तपः उच्यते,× स्वाध्यायज्ञानयज्ञाश्च यतय सशितव्रता" (गी०), "योगा त्रयो मया प्रोक्ता, नृणां श्रेयो विधित्सया, ज्ञान, कर्म च, भक्तिश्च, न उपायोऽन्योऽस्ति कुत्रचित, निर्विण्णाना ज्ञानयोगो, न्यासिनां इह कर्मसु, (७०),तेषु अनिर्विण्णचित्ताना, कर्मयोगस्तु, कामिना, यदृच्छया सत्कथादौ जातश्रद्धस्तु य पुमान्, न निर्विण्णो, नातिसक्तो, भक्तियोगोऽस्य सिद्धिद" (भा०), कर्ममार्गानुसरणाद् भक्तिरुपद्यते क्रमात्, भक्ते ज्ञान, तत ज्ञानाद् भक्तिरुत्तरा भवेत्, "यो मा पश्यति सर्वत्र, सर्व च मयि पश्यति" (गी०), "स भक्ति सर्वभूतेषु कुर्वतेऽव्यभिचारिणीं' (वि०पु०) "ये त्वक्षर अनिर्देश्य अव्यक्त पर्युपासते, ते प्राप्नुवन्ति मामेव सर्वभूतहिते रता" (गी०) यतो मूर्त अमूर्त च, व्यक्तिश्चाव्यक्तमेव च, जावश्च ब्रह्म चैवापि, सदैवापृथगेव हि। सर्वभूतहिता भक्ति पुनर्भूय प्रयोजिका चास्ति सर्वजर्मानस्य निष्कामस्य नु कर्मण। एव त्रयाणा आवर्त्त सदैव परिवर्त्तते। त्रयाणा महत्त्व वै, न पृथक्त्व कथचन। "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" (गी०); कर्म किंचिद नैवास्ति यन् न प्रेरित इच्छया, ऋणनिर्मोचनेच्छा वा, ऽप्यथवा ऋणकारिणी, इच्छा सा तु द्विविधा प्रोक्ता,

कर्म, कामो, यथा द्विधा; इच्छा च न विना ज्ञानं,इष्टस्य खलु वस्तुनः, मुग्धं वा ऽप्यथवा स्पष्टं; त्रिसम्बन्धस्तु तादृशः ।(८०) "अन्योन्याभिभवाश्रयमिथुनजनन-वृत्तयश्च गुणाः" (सां०का०) । प्रणवस्य तु मार्गो यः, त्रयः तस्मिन् समाहृताः ; निष्कामो कामवान् सोऽस्ति, निष्कर्मा कर्मवांस्तथा; "प्रणवः सर्ववेदेषु, × गिरां अस्मि एकं अक्षरं; × अहं कृत्स्नस्य जगतः प्रभवः प्रलयः तथा; 'मत्तः' ('अहमः') परतरं 'न' 'अन्यत्' किंचिद्; × आत्माऽहमस्मि च; 'अहं' आदिश्च, मध्यं च, भूतानां अंत एव च; मयि ('अहमि') सर्वं 'इदं' प्रोतं, सूत्रे मणिगणा इव; ये चैव सात्त्विकाः भावाः, राजसाः तामसाश्च ये, 'मत्तः' ('अहमः') एवेति तान् विद्धि; न तु 'अहं' तेषु; ते मयि; न 'मे', 'अहम.', अस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन, न-अनवाप्तं अवाप्तव्यं, वर्ते एव च कर्मणि, × चातुर्वर्ण्यं 'मया' ('अहमा') सृष्टं गुण-कर्म-विभागशः, तस्य कर्तारं अपि 'मां' ('अहम्') विद्धि अकर्तारं अव्ययं, न 'मां' (आत्मानं) कर्माणि लिम्पन्ति, यतो नास्ति फले स्पृहा", ( कृत्य-बुद्ध्यैव कुर्वे यत्, ऋणनिर्मोचनाय वै, ) "इति 'मां' ('अहमं', आत्मानं ) योऽभिजानाति, कर्मभिर्न स बद्ध्यते । सक्ताः कर्मणि अविद्वांसो यथा कुर्वन्ति वै जनाः, कुर्याद् विद्वांस्तथा असक्तः चिकीर्षुर्लोकसंग्रहं" (गी०) । (९०) ।

'स्व-अध्याय'-शब्दस्यार्थस्तु निरुक्तः पूर्वमेव हि; सच्छास्त्ररूपवेदानां 'अध्येयानां' तथैव च; "योऽनधीत्य द्विजो वेदं अन्यत्र कुरुते श्रमं", 'अ स्व-अध्याये', ज्ञानजाल-अध्ययन-अध्यापने तथा, "स जीवन्नेव शूद्रत्वं आशु गच्छति सान्वयः । षट्त्रिंशदा-ब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतं; तदर्धिकं, पादिकं वा, ग्रहणान्तिकमेव वा" । आद्यं शिक्षकपूरस्यर्थं; द्वितीयं क्षत्रवृत्तिकं; अलं तृतीयं वार्त्ताय; चतुर्थं शिल्प सेवयोः। स्व-अध्यायस्य 'प्रातिभस्य' 'तारस्य' महिमा ईदृशः । प्रणवस्यआशयं जानन्, 'यज्ञ'-सूत्रं बिभर्ति यः, आत्मानं 'उप' 'नीतो' यः, 'द्विज'-नाम × सोऽर्हति; सहि 'प्रतिभया' युक्तः, स जातः 'सर्व-वित्-मति' । यज्ञ-सूत्रं प्रतीकं हि प्रण-वस्यैव सर्वथा; मूर्तीकरोति चापि एतत् 'तार'स्यार्थं तु तात्त्विकं;एकवृत्त् च त्रिवृत् स एतत्, एकत्वे त्रित्व-सूचकं, प्रकृतेस्त्रिगुणतायाश्च, पुरुषस्य तथैव च, सच्चिदानन्द-रूपस्य असंख्य-त्रिक-चितस्य च ; 'वृत्त'त्वात्, तेन 'शून्य'र्थं द्वंद्व-योगस्य च अज्यते । (१००) । "महासरस्वति चिते !, महालक्ष्मि सदात्मिके !, महाकालि आनन्दरूपे !, ऐं-ह्रीं-क्लीं इति नामभिः तंत्रेषु बहुधा गीते !, स्वतत्त्वज्ञानसिद्धये,

उन्माद, मृत्यु च जनयेद् असौ । 'आ ह एव स नखाग्रेभ्य परमं तप्यते तप, य स्रग्वी अपि द्विजोऽधीते स्वाध्याय शक्तितोऽन्वह" (म०), "प्रणवादि पवित्राणां जप स्वाध्याय" उच्यते, शब्दोच्चारणमात्र न, "अपन्नस्यार्थभावन" (यो०सू०भा०)। 'अधिक'यद्यद्'इष्ट स्याद्,यद्यत्नेन तद्'ईयते',बुध्यते,लभ्यते चैव, तद्धि एव 'अध्ययन' स्मृत । (६०) । धर्मश्चार्थश्च कामश्च, त्रिवर्गो 'ऽभ्युदया' त्मक, परम पुरुषस्यार्थ परमात्मेति उदाहृत, नास्ति श्रेय परं यस्मात् तत् च 'नि श्रेयस,' तथा, यद्यत्नेन'अधिगम्येत,'तद्धि एव'अध्ययन' स्मृत । सच्छास्त्राणां तु सर्वेषां इयमेव परा गति, साफल्य, परम लक्ष्य, यच् चतुष्टयसाधन । सर्व 'अध्ययन', 'स्वस्य', स्व रूपस्य, परात्मन, जीवात्मनश्च, ज्ञानाय, अनुभवाय, प्रवर्त्तते, स्वस्यैवाध्ययन, ज्ञान, 'स्वाध्याय' इति कथ्यते । 'स्वे' प्रज्ञाते च विज्ञाते, सामान्येन, विशेषत, जगद् भवति सुज्ञात अखिल तत्त्वतो,यत । ज्ञानस्य, अनुभवस्यापि, तत्त्व गीतासु गीयते—"अमानित्व अदम्भित्व, अहिंसा, क्षान्तिर्, आर्जव, अध्यात्मज्ञाननित्यत्व, तत्त्वज्ञानार्थदर्शन, एतज्ज 'ज्ञान' इति प्रोक्त 'अज्ञान' यद् अतो ऽन्यथा, × स्वाध्यायाभ्यसन चैव वाङ्मय तप उच्यते, × स्वाध्यायज्ञानयज्ञाश्च यतय संशितव्रता" (गी०), "योगा त्रयो मया प्रोक्ता, नृणां श्रेयो विधित्सया, ज्ञान, कर्म च, भक्तिश्च, न उपायोऽन्योऽस्ति कुत्रचित्, निर्विण्णानां ज्ञानयोगो, न्यासिनां इह कर्मसु, (७०),तेषु अनिर्विण्णचित्तानां, कर्मयोगस्तु, कामिनां, यदृच्छया मत्कथादौ जातश्रद्धस्तु य पुमान्, न निर्विण्णो, नातिसक्तो, भक्तियोगोऽस्य सिद्धिद" (भा०), कर्ममार्गानुसरणाद् भक्तिरुत्पद्यते क्रमात्, भक्ते ज्ञान, तत ज्ञानाद् भक्तिरुत्तरा भवेत्, "यो मां पश्यति सर्वत्र, सर्वं च मयि पश्यति" (गी०), "स भक्ति सर्वभूतेषु कुर्वन्तऽव्यभिचारिणीं' (वि०पु०), "ये त्वक्षर अनिर्देश्य अव्यक्त पर्युपासते, ते प्राप्नुवन्ति मामेव सर्वभूतहिते रता" (गी०), यतो मूर्त्त अमूर्त्त च, व्यक्तिश्चाव्यक्तमेव च, ज्ञानश्च ब्रह्म चैवापि, सदैवापृथगेव हि। सर्वभूतहिता भक्ति पुनर्भूय प्रयोजिका चास्ति सर्वजनीनस्य निष्कामस्य तु कर्मण । एव त्रयाणां आवर्त्त सदैव परिवर्त्तते । त्रयाणां सहत्वञ्च वै, न पृथक्त्व कथञ्चन । "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" (गी०), कर्म किंचिच्च नैवास्ति यन् न प्रेरित इच्छया, ऋणनिर्मोचनेच्छा वा, ऽन्यथवा ऋणकारिणी, इच्छा सा तु द्विविधा प्रोक्ता .

कर्म, कामो, यथा द्विधा; इच्छा च न विना ज्ञानं,इष्टस्य खलु वस्तुनः, मुग्धं वा ऽप्यथवा स्पष्टं; त्रिसम्बन्धस्तु तादृशः ।(८०) "अन्योन्याभिभवाश्रयमिथुनजनन-वृत्तयश्च गुणाः" (सां०का०) । प्रणवस्य तु मार्गो यः, त्रयः तस्मिन् समाहृताः ; निष्कामी कामवान् सोऽस्ति, निष्कर्मी कर्मणोस्तथा; "प्रणवः सर्ववेदेषु, × गिरां अस्मि एकं अक्षरं; × अहं कृत्स्नस्य जगतः प्रभवः प्रलयः तथा; 'मत्तः' ('अहमः') परतरं 'न' 'अन्यत्' किंचिद्; × आत्माऽहमस्मि च; 'अहं' आदिश्च, मध्यं च, भूतानां अंत एव च; मयि ('अहमि') सर्वं 'इदं' प्रोतं, सूत्रे मणिगणाः इव; ये चैव सात्त्विकाः भावाः, राजसाः तामसाश्च ये, 'मत्तः' ('अहमः') एवेति तान् विद्धि; न तु 'अहं' तेषु; ते मयि; न 'मे', 'अहम.', अस्ति कर्त्तव्यं त्रिषु लोकेषु किंचन, न-अनवाप्तं अवाप्तव्यं, वर्ते एव च कर्मणि, × चातुर्वर्ण्यं 'मया' ('अहमा') सृष्टं गुण-कर्म-विभागशः, तस्य कर्त्तारं अपि 'मां' ('अहमं') विद्धि अकर्त्तारं अव्ययं, न 'मां' (आत्मानं) कर्माणि लिम्पन्ति, यतो नास्ति फले स्पृहा", ( कृत्य-बुद्ध्यैव कुर्वे यत्, ऋणनिर्मोचनाय वै, ) "इति 'मां' ('अहमं', आत्मानं ) योऽभिजानाति, कर्मभिर्न स बध्यते । सक्ताः कर्मणि अविद्वांसो यथा कुर्वन्ति वै जनाः, कुर्याद् विद्वांस्तथा असक्तः चिकीर्षुर्लोकसंग्रहं" (गी०) । (९०) ।

'स्व-अध्याय'-शब्दस्यार्थस्तु निरुक्तः पूर्वमेव हि; सच्छास्त्ररूपवेदानां 'अध्येतव्यं' सर्वथ च; "योऽनधीत्य द्विजो वेदं अन्यत्र कुरुते श्रमं", 'अ स्व-अध्याये', छन्दश्छात्र-अध्ययन-अध्यापने तथा, "स जीवन्नेव शूद्रत्वं आशु गच्छति सान्वयः । षट्त्रिंशदा-ब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतं; तदर्धिकं, पादिकं वा, ग्रहणान्तिकमेव वा" । आद्यं शिक्षयपूरस्यर्थं; द्वितीयं क्षत्रवृत्तिकं; अलं तृतीयं वार्त्तायै; चतुर्थं शिल्प सेवयोः। स्व-अध्यायस्य 'प्रातिभस्य' 'सारस्य' महिमा ईदृशः । प्रणवस्याशयं जानन्, 'यज्ञ'-सूत्रं बिभर्त्ति यः, आत्मानं 'उप' 'नीतो' यः, 'द्विज'-नाम तु सोऽर्हति; सहि 'प्रतिभया' युक्तः, स ज्ञानः 'सर्व-वित्-भाति' । यज्ञ-सूत्रं प्रतीकं हि प्रण-वस्यैव सर्वथा; मूर्त्तीकरोति चापि एतद् 'तार'स्यार्थं तु तात्त्विकं;एकवृत् च त्रिवृत् च एतत्, एकत्वे त्रित्व-सूचकं, प्रकृतेस्त्रिगुणायाश्च, पुरुषस्य तथैव च, सच्चिदानन्द-रूपस्य असंख्य-त्रिक-चितस्य च ; 'वृत्त'त्वात्, तेन 'शून्य'त्वं द्वंद्व-योगस्य च भज्यते । (१००) । "महासरस्वति चित्ते !, महालक्ष्मि सदात्मिके !, महाकालि आनन्दरूपे !, ऐं-ह्रीं-क्लीं इति नामभिः तंत्रेषु बहुधा गीते !, सत्यात्मज्ञानसिद्धये,

अनुमंदध्महे, चंडि!, वयं त्वां हृदयाम्बुजे" ( दुर्गासप्त०, गुप्तवती टी० ) ; "सिसृक्षुर् एकः एवाग्रे,समासीनः शिवः स्वयं दृष्ट्वा 'गुण'-मयीं मायां 'सूत्र'-रूपां इवाकरोत्(गुणः सूत्रं); तत्सूत्रं उपवीतत्वाद् 'ब्रह्म-सूत्रं' इदं कृतं" (आश्वला०); "कर्तव्यं उत्तरं वासः पंचसु एतेषु कर्मसु, स्वाध्याय-उत्सर्ग-दानेषु भुक्त-आचमन-योस्तथा" ( बौधायन० ) ; "वासोविन्यासविशेषः ( एव ) यज्ञोपवीतं ; दक्षिणं बाहुमुद्धरते, अवधत्ते सव्यं, इति यज्ञोपवीतं, अजिनं वासो वा दक्षिणतः उपवीय" ( तैत्तिरीय-आरण्यकं ) ; "नित्यमुत्तरवासः कार्यं, अपि वा सूत्रमेवोपवीतार्थे" ( आपस्तम्बधर्मसूत्रं ) । "तैत्तिरीयाः, कठाः, काण्वाः, चरकाः, वाजसनेयिनः, कंठाद् उत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः ; बह्वृचाः, सामगाश्चैव, ये चान्ये यजुःशाखिनः, कंठाद् उत्तार्य सूत्रं तु पुनर्हन्ति मरीचयो" ( वीरमित्रोदय संस्कार प्रकाशे उद्धृतं भृगुवचनं )। "युवा सुवासाः परिवीत आगात्" (वेद०); इत्यादि। परिवीतोपवीताभ्यां शब्दाभ्यां वस्त्रधारण-प्रकारो हि, पुराकाले, ऽसूच्यत इति अनुमीयते । (११०)। वामांसस्योपरि,तथा वक्षःकक्षान्तरेऽपि च, अस्ति उत्तरीयस्य यद् वानं, परिधानं,च वेष्टनं, तदेव हि उपवीतत्वं, परिवीतत्वं,पर वा । प्राचीनस्य विधेर् अस्य पालकाः बौद्धभिक्षवः, काषायवस्त्राणि अद्यापि धारयंति उपवीतवत् ।

द्वि-अर्थेद् धार्यते सूत्रं एतत्, तेन तु सूच्यते—"द्विः जातोऽयं, द्वयोश्चापि,प्रकृतेः, पुरुषस्य च, एकानेकात्मरूपं च,द्व्यात्मकं चापि संसृतेः, दृष्टवान् सम्यग् ; आत्मज्ञः, सर्वेषां हितचिन्तकः, सम्यग्दर्शनसम्पन्नः ; यज्ञाय प्रस्तुतः सदा ; यज्ञायैव उपवीतं ( 'वे', तन्तु-सन्ताने ) यत् सूत्रं एतेन धार्यते' । 'वृत्तं' एव हि 'शून्यस्य' गणिते चिह्नमस्ति वै ; 'अनन्तस्य'ापि, यद् वृत्ते नान्तो नादिश्च लक्ष्यते; यज्ञोपवीतं चैवास्ति 'वृत्तं' देहस्य वेष्टकं, देहे सर्वाणि तत्त्वानि सांख्येयूक्तानि यानि वै, सर्वाणि कवलीकृत्य 'शून्यं' ब्रह्म विराजते, यज्ञोपवीतरूपेण, नन्वेतदपि सूच्यते । "दर्शनेन विहीनस्तु संसारं प्रतिपद्यते", आत्मनश्च परेषां च बन्धान् क्लिष्टान् करोत्यसौ, "सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते" ( म० ), भय-संशय-मुक्तोऽयं अन्यांश्च कुरुते तथा । ( १२० ) । अथोऽयं 'यज्ञ'-सूत्रस्य लुप्तप्रायो हि साम्प्रतं ; 'द्विजाः' सद् धारयन्तश्च प्रायशो नाम-धारकाः । अत एव हि जाता इयं समग्रे पृथिवीतले, न केवलं भारते हि, दारुणा दुर्व्यवस्थितिः ।

सन्त्येव केचनाद्यापि शुद्धात्मानो'द्विजातयः',सत्यमेव द्विवारं ये जाताः,भुवि,

तथऽत्मनि,योद्धार ,सात्त्विका ,'सन्त ''महात्मान 'तपस्विन ,मासाश्च विविधा कार्षा' योगस्य तपसस्तथा,'सन्त' 'औलिया' मिस्टिक्'इति नामभिर्विदिता जनै , हिन्दु-भिर्मुस्लिमैश्चापि क्रिश्चनादिभिरेव च। देश वेश जाति धर्म भाषा-आचार भिदासु च बुद्धिर् न अभिनिविष्टा एषा, सर्वकल्याणकांक्षिणा, एक [illegible] परमात्मान सर्व-जीवेषु पश्यता, तथापि क्रूररूपेभ्य सौम्यरूपाणि रक्षताम्। "स्व शान्त रूपेषु इतरै स्व रूपै भग्यर्घमानेषु, अनुकम्पितअन्मा, परामर्शो, महदशुक्तो, हि अजोऽपि जातो भगवानिपाग्नि " ( भा० )। "वात्सल्ये मनुचन् नृणा", " सर्वभूतहिते रता ", न केवल भारते हि, सर्वदेशेषु ते स्थिता , पर्वतेषु, अपि अरण्येषु , तथैव नगरेष्वपि , उग्रायचेम रूपेण , चीवन्तो बहुवृत्तिभि ( १२० ), साम्प्रदायिकधर्माणा रूपाणि विविधानि च धारयन्तो, सदा स्वेकं परमात्मान आस्थिता , ध्यायन्तो, वर्धयन्तश्च, मानवाना हित सदा, मनोश्च समर्पणो च, (ये भवति 'आधिकारिका ', सर्वमानववंशस्य अभ्युदयाय च मुक्त्ये), तेषा' अनुचराणा च , ते सर्वेऽप्यनुयायिन , अबुद्धिपूर्वकं केचित्, केचिद्धि बुद्धिपूर्वक। महाभागास्तु ते येषां बुद्धिपूर्व अयं क्रम ,तेषामेव कृते नून धर्मो न मितरा स्मृत'।

सत्यसाधो , दम्भसाधो , विवेके निकषो ह्यय—स्वार्थनिष्ठा न सन्तस्ते ; सन्तस्ते, ये तु नेदृशा , लोभिनो ये, न ते सन्त , ये सन्त , ते न लोभिन । सत्य सत्ये, तत्य मिथ्ये, बिम्ब च प्रतिबिम्बक, एक रूपे, बुधेनापि दुर्विवेच्ये, तत्र तस्मा मार्गितव्य ततो ह्येतद् विवेचन समुद्यमै —लोकैषणा वा वित्तस्य,पुत्रादेर्, एष णाऽथवा, साधुरूपस्य चास्यास्ति हृदि लीलाऽथवा, न हि , उपदेश च धर्मादे , येषरू हितनाम्यथा करोति , एषणया वाऽपि सासार्या स्वार्थबद्धया। सन्यासिना अपि दृष्टा प्रतिष्ठेच्छा तु भूयसी , 'स्पृशन्तु पादौ मे नत्वा, महाराज इति शब्दत सम्बोधयन्तु मा यौन पुन्येनआम्रेडनेन च, गायतु मे यशश्चापि सवत्रैव हि घोषयत'—लोकैषणा यतीनां च एवरूपा परिदृश्यते। मठादिमुख्य चेच्छा च तेषा विसैषणा ननु। शिष्या मे बहव सन्तु, मण्डलीशो भवेय च'—परिवारैषणा चेय, तेषा, ईदृशत्वकांक्षिणा। ईदृस्य एषणा यस्य लक्ष्यन्ते साधु-रूपिण , नासौ सत्य साधुरिति तु अनुमेयं विपश्चिता। नेदृस्य एषणा यस्य, सत्य साधु [illegible] एष हि। कषणीयौ विपश्चिद्भि 'साध्वोर्' एवं गुणागुणौ। 'चर्पटपञ्जरिकायां' एव, यति दश नाम-कृता, मस्करिणा, शंकरगुरुणा यत् स्वय उक्त, तच् घुणुत दृह हि दाम्भिक-

रूपं—"जटिलो, मुण्डी, लुञ्चितकेश, काषायाम्बरबहुकृतवेष, पश्यन्नपि नहि पश्यति, मूढ, उदरनिमित्त विरचितवेश"। परीत्य अन्यत् चाप्यत्र—'धर्म कृत्य' दिशति यत् 'साधु-वेश', स सत्योऽस्ति 'धर्मो', यो नाम्नि 'धारक'; "धारणाद् धर्म इत्याहुर्, धर्मो धारयति प्रजा", इति लक्षण मन्वेति; ॥ या धारयति प्रजा, जनसम्बाधकारो अस्ति, कोलाहली एव केवल, कौतुक अभिनय प्रेक्षा (तमाशा)-यत् जनप्रसर्पण क्षम। दृश्यते प्रायशो ह्येतत् सत्कुलेषु ईदृशेषु तु, यत् (न) निष्पतति श्रद्धान्धा 'साधूना चरणेष्वपि, रजांसि तेषा पादानां शिरसि स्थापयन्ति च, अथापि पादान् प्रक्षाल्य पिबन्ति 'चरणोदक'। लब्ध स्वर्गान्, हृत द्वायान्, सर्वपापविमोचितान्, एतावतैव मन्यन्ते 'हिन्दवो' मुग्धबुद्धय, स्वल्पेनैव प्रणामेन बहुलाभस्य लोभिन। अहो 'हिन्दुत्व'-नीचत्व, आत्म विस्मृतिरपि अहो, अहोऽन्त-रात्मायमान, मौढ्यं पातित्यमप्यहो!। धनानि, अन्नानि, पानानि, क्षीर यद् अमृत बिन्दु, स्नापयन्ति, क्षिपन्त्यग्नौ, नालीषु मलिनास्वपि प्रवाहयन्ति, बहुईर आयासैश्च निरर्थकं। नहीदृशो धर्मभिस्तु कल्याणं कस्यचित् क्वचित् दृश्यते साध्यमान वै, स्वार्थि, अपार्थि एव वा पुन। दशभ्यो वा, शतेभ्यो वा, सहस्रेभ्योऽपि वा यति, मत्तपोरहितेभ्यस्तु, विमुखेभ्यश्च विद्यया, दीयते दक्षिणा किंचित्, किं तया दाम्र चीतया? न जीविका स्थिरा तेषा तावता भविता ननु; न सद्धर्मस्य, वा अर्थस्य, कामस्य अभ्युदयोऽथवा, सद्वार्त्ताचाश्च नो वृद्धि, सज्ज्ञानस्यापि नैष हि, न स्वा-स्थ्यवृद्धिरेवापि, नऽस्था च परमात्मनि, मन प्रसाद, शान्तिर्वा, देशे सम्भाव्यते नहि, कर्मकाण्डाम्बरैर् एभि कार्यैः 'पुष्पित वाग्'-भूतै। प्रत्युत, एषा फल, मूल, 'मूढ-ग्राह विवर्धन, मत्सराणा तथा वृद्धि, आजीना व्यर्थकर्मसु। यदि शुद्धैर्मनोभिस्तु, श्रद्धया चान्तरात्मनि, बहुभि पाठशालासु, गृहस्थैश्च गृहे गृहे, धामप्रस्थैर्वनेषु, एव यतिभिर्यत्र ते स्थिता, समासहृदयै, काले नियते च, दिने दिने, सन्ध्योपस्थान समये, सवितु परमात्मन क्रियेत प्रार्थना, स्वयं, विनैवप्रदम्बरेण हि, जननाया स्सम्प्राया कल्याण सर्वथा भवेन्।[१]

---

१ श्रद्धान्ध्यपोषणस्यैव फल एतद् विजम्भन, हिन्दूदासस्य दासत्वबुद्धिनित्य विवर्धते। 'गाजीमियानो कब्रेषु', 'पीराणां तकियासु' च, 'औलिया-दरगाहेषु' 'ककड़ा-वीरकेषु' च, येषु केष्वपि एतद्वेषु, निष्पतति [redacted] अधोमुखा। टोना टोट्का-झाड़-फूँक-गडा-तावीज-

'तपो-विद्या'–'शौर्य-रक्षा'–'दास्य-दान'–द्विकाः यतः भारते विलीभूताः, धर्मोऽपि तरलस्ततः । प्रणवाभ्यायिनः, तस्य मर्मज्ञाः, तत्त्वदर्शिनः, "एकान्तिनो हि पुरुषाः, दुर्लभाः बहवो ननु ; यद्येकान्तिभिर् आस्तीर्णं जगत्स्यात्, सर्वदर्शिभिः, अहिंसकैरात्मविद्भिः, सर्वभूतहिते रतैः, भवेत् कृतयुगप्राप्तिः, आशीःकर्मविवर्जिता" ( म० भा० शां० ) ।

ॐ भवंतु भूयो बहवो धरायां तादृशाः जनाः ; (१४०) ; कुर्वन्तु सुव्यवस्थां च धर्म्यां सर्वत्र भूतले ; व्ययंतु राज्यं च कलेः ; प्रेम्णः सत्यस्य च सेतु अपि, यत् सुराज्यं, स्वराज्यं च, स्वाराज्यं च परात्मनः ॐ ।

धर्माणां पुनः पुनः संस्करणस्यावश्यकता ।

( १२ )—प्र० धर्माणां प्रतिसंस्कारो ऽभिष्यते केन हेतुना ? वैदिकानां च बौद्धानां वैरं कस्माद् अजायत ? कस्तयोर् अधिकं दोषी ? कथमप्यास्तु निर्णयः ?

---

येषु च, यत्रो अन्यां निबध्नन्ति, न ह्येव स्वावलम्बिनः, हीना दीनाः पराधीनाः परप्रत्ययबुद्धयः, यस्य कस्यापि पादौ च शिरसा स्प्रष्टुं उद्यताः, आ-'चौकीदारं, आ-'गंगा-बाबा-कन्फट-साधुकं' ; बिडालैश्च, शृगालैश्च, मुसलीभिः, शरीरैः, मृगैः, शकुन-व्यपदेशैस मोह्यन्ते कृपणाः मूढाः; नाशिता संघ-बुद्धिश्च, राष्ट्र-बुद्धिश्च नाशिता, विवेकशून्यया दृढया श्रद्धया स्वार्थगर्भया, अस्वाधीनैः परपक्षैः स्वराज्यं नाशितं तथा । स्पर्धन्ते 'विप्रवर्यैस्' तु 'शुचिमन्यैः' 'पवित्रकैः', श्रद्धां प्राप्तुं ईदृशानां, 'मुसल्मानफकीरकाः' ; लभन्ते चाधिकां तां तु, विभर्यन्ति अपि चासकृत्, तथा यथा हिन्दवो हि मुस्लिमत्वं भजन्ति वै । न हीदृशाः प्रजाः आसन् भारते, वैदिके युगे; उत्साहहृदयाः आर्याः अभूवन् स्वावलम्बिनः । आभिचारिकाः मंत्राः क्षिप्ताः यस्माद् अथर्वणे, तस्माद् 'विज्ञान'-पूर्णोऽपि वेदो यातोऽपवित्रतां । "धारणाद् धर्म इत्याहुर्धर्मो धारयति प्रजाः"; संघीकृत्य प्रजाः सर्वाः सम्यग्धारयतीह यः, धर्मः स वर्धते नित्यं; विदारयति नैव यः । सोऽयं प्रचलितो हिन्दू-'धर्म'-आभासो न धारकः साम्प्रतं, प्रत्युतास्त्येव प्रजानां तु विदारकः, उच्च-नीच-दर्प-घृणा-द्वेष-भेदस्य कारकः । मुस्लिमे, क्रिश्चने, धर्मे ऽस्ति आधिक्यं संघशीलता; हिन्दु-'धर्मात्' ततस्तु सो ऽन्यस्थं बलवत्तरौ । यदीदृशी दशा हिन्दु-'धर्मस्य' न विशोध्यते, कर्म-वर्ण-व्यवस्थाभिस्, तदाऽसौ तु मरिष्यति ; विशोध्यते यदि तथा, तदाऽयं भविताऽमरः ।

उ०—"अन्ये कृतयुगे धर्मा॰, त्रेतायां, द्वापरे ऽपरे, अन्ये कलियुगे, नृणा, युगह्रासानुरूपत ( म० ), इत्येव मनुर् आह स्म, तथाऽन्ये च महर्षय । प्रत्यक्षमपि तद्, देश-काल-वस्था विभेदत , आचाराणा प्रकाराणां सर्वेषा परिवर्त्तन , नहि त्रिषवणस्नान हिमाद्रौ हिमचारिणा, न अर्कतप्ते मरौ चापि दिवासूर्याग्निसेवन, ग्रीष्मे च न ऊर्णावस्त्राणां ज्येष्ठमासे धारण, न शीतकाले शिशिरे तनु कार्पासवाससो । महर्षिभि स्वय चैव विहित तद्, अमत्य, "देश-काल-निमित्ताना भेदैर्धर्मो विभिद्यते"। अदृश्येन प्रभावेन महाण कालरूपिण , प्रकृतेस्तु स्वभावेन अस्य ानन्त ानादिनैव हि, चक्रवद् भ्रमतो नित्य, सर्वं विपरिणाम्यते ( १५० ) । परमात्माऽपरिणामी , प्रकृति परिणामिनी, क्षणे क्षणे सङ्क्रमते , 'चितिर् अप्रतिसङ्क्रमा" ( यो० सू० )। भूतानां खलु संयोगा , तज्जद्रव्याणि चैव हि , रूपाणि चापि वृक्षाणां, तथैव पशु पक्षिणां, गुणदोषात्मका धर्मा , मानवाना तथैव च, जल स्थल ाब्धि द्वीपाना, हिमानी, मरुधन्वना, नदीनां, पर्वत अरण्य ह्रदआदीनां तथैव च, उर्वरा ऊपर भूमीनां, पृथिव्या सनिवेशन, समये समये चैतत् सर्वं विपरिवर्त्तते । भूगोलस्य रूपगती भिद्येते च युगे युगे, भ गणस्यापि गतय विक्रियन्ते॰दिने दिने, उद्यति केतवश्चैव अपियति तथैव च , बृहत्तमानि सृज्यन्ते लीयन्तेऽपि जगन्ति वै, ससारे चचल सर्वं, परिणामि प्रतिक्षणं ; एक सनातनो ह्यात्मा स्थाणुर्निश्चल निष्क्रिय , नित्य सर्वगतोऽभेद्य सर्वदा एकरस स्थित । मार्कण्डेय वायु विष्णु कूर्म ब्रह्माण्ड-वन्हिषु, रामायणे, भारते च योगवासिष्ठे एव च, काश्यपीसंहितायां चान्यग्रन्थेष्वपि वैद्यके, युगभेदात् नृणां रूपभेदो भूयांस्तु वर्णित , ( १६० ), धर्मआचारादिभेदश्च अदिष्टस्तदनुसारत । कृतेऽभवन् शरीराणि बृहन्ति, अपि च धूमवत् , न घनानि, न भेद्यानि शस्त्रास्त्रैर्, नापि वह्निना दाह्यानि, नापि नाश्यानि प्रकारैरपरैरपि ; आयु प्रमाणे संपूर्णे तान्यलुप्यन्त धूमवत् । ततस्त्रेता युगे देहा घनतां दृढतां गता ; वाल्मीकिनोक्त, रामो हि "न्यग्रोधपरिमंडल ", 'प्रसारितभुजस्येह, यस्य बाहुद्वयान्तरं, उच्छ्रायेण सम, स स्यान् न्यग्रोधपरि मडल , त्रेतायामभवंस्तद्वत् पुरुषा सुमहाबला" ( अग्नि० )। नामानि नूत्न पत्राणां पूर्वं उक्तानि यानि वै, रेल्वे-तार सैक्ल वा, धड़ी एरोप्लेन स्टीमरा, टेलीफोन्-रेडियो मोटर्कार फौंटेन्पिना अपि, आविष्कारा , यास येऽन्ये चोपस्र॰

तास्तु पश्चिमे—न श्रुतौ, न स्मृतौ, तेषां निषेधो विधिरेव वा, सर्वे किन्तु उपयुज्यंते ते सर्वैरपि हिन्दुभिः, वेदवादरतैश्चापि, धर्मध्वजतमैरपि। आचाराणां च, धर्माणां, कर्त्तव्य परिवर्तनं, आम्नातानामपि, दृष्ट्वा अवस्थायाः परिवर्तनं—आम्नायेनैव विहितो नियमोऽयं सनातनः। (१७०)। गवालम्भादि धर्माणां कृतमेव निवर्त्तनं, तथा गोवर्धनादीनां नवानां च प्रवर्तनं, कृष्णाद्यैर् वेदमर्मज्ञैर् विद्वद्भिर् बहुदर्शिभिः, अवस्थापर्ययं बुद्ध्वा, सर्वलोकहिते रतैः। एवं च वैष्णवा धर्माः, शैवाः, शाक्तास् तथैव च, सौराश्च, गाणपत्याश्च, तथाऽन्येऽपि तथाविधाः, लोकावस्थाऽनुसारेण, जनकल्याणमीप्सुभिः, अज्ञाऽगारेषु मग्नानाम् उद्धाराय प्रकल्पिताः, एवमेव हि भूयाद्वै वराकाणां समुद्भवः।

किंतु सर्वेऽपि, कालेन, अस्य येव पुनः पुनः, अविद्या जनितैः रागद्वेषैर् अभिनिवेशाद्यैः, मत्सरैर् अस्मितामूलैर्, लोभमोहमदैरपि, 'जातस्य हि ध्रुवं भावी विकारः, क्षय एव च, मृत्युश्चापि, सतः, कालाद्, ध्रुवं जन्म, मृतस्य च', पुनः पुनश्च धर्माणां शोधनं क्रियते सतः। उपदेशार्थं आधाय, महद्वाक्य आत्मनि, स्वयं गीतं मुकुन्देन, 'धर्मविप्लावने तु अहं, 'धर्मसंस्थापनार्थाय, संभवामि युगे युगे'', ''सर्वेषामवताराणां निधानं बीजमव्ययं ''(भा०), महतस्य, बुद्धितत्त्व, महान् आत्मेति यत् स्मृतः, (१८०), तत्सत्त्वांशोपाधिमन्तोऽवतरन्ति स्वेद इव, श्रेष्ठा ईश्वरजीवास्तु, जनानां उद्धिधीर्षया। सनातनस्य धर्मस्य, सर्वकालोपयोगि यत्, तदेव धर्म सारं हि, नवैः शब्दैस्तु, दिश्यते, हि अवतार मसीहादि रसूलादिभिरेव च। 'विभूति मन्तो' 'मनु आ', 'महद्वयुता' अपि, तेजोंऽशेन विशेषेण युताश्च, ज्ञानस भृता, सूर्यलोकाद् विनिःसृत्य, मुक्तानां आगत्याद्, भुवि हि दृश्यते धर्मसुदृष्ट्यै, वारं वारं, स्थले स्थले। 'नारायणस्य' च, तथा, प्रतिद्वन्द्वि स्वरूपिभिः, 'मतिना शयनैश्चापि, स्वार्थान्धैः कलिमूर्तिभिः, सा शुद्धिर्हन्यते जातु, तथैव च पुनः पुनः। एवं देवासुरद्वंद्व प्रवृत्त संसृतौ सदा, जगन्नाटककारस्य सर्वाभिमतवाञ्छया।

प्रचलिते वैदिके धर्मे, आभिजात्यमदोद्धतैः विविधैर् जातिभिर्, जन्म-वर्णाग्रहविमोहितैः, कल्याणानि त्यजद्भिश्च, गृध्नुभिः सर्वसम्पदां, वाम-तन्त्रादि-मार्गाणां अद्ध्योपरस्थेषु दीक्षितैः, कापालिकादिभिश्चैव घोरप्रचाररतैर् भृशं, सर्वदेशे समाकीर्णे युद्ध समभवद् भुवि (५६७ वि० पूर्व), (१९०), 'शाक्य' आदि-क्षत्रियाणां गण-राज्ये, हिमालयाद् दक्षिणे, साम्प्रतं यत्र बलरामपुरं स्थितं, 'उस्का-बाजार' नाम्ना च 'रेल्वे

स्टेशन'इत्यपि,नेपाल-त्वपरसीमायाः पाईर्वे,कपिलवस्तुनि पुरे अट्टे ; विरक्तश्च, दृष्ट्वा लोकस्य दु स्थितिं । सात्विकः करुणोन्मादः,स्वान्तं व्याप अस्य कोमलं; सांसारिकेषु भोगेषु तीव्रा उत्पेदे घृणा,तथा; पत्नीं,अलङ्कृतां सर्वैः शोभनैर् उत्तमैर्गुणैः, सर्वाङ्ग-सुन्दरं चापि पुत्रकं शिशुकं नवं, तत्याज, परदुःखार्तः, युवा एव, स महामतिः, 'अन्येषु दुःखतप्तेषु सुखभोग्यहं सुखं कथं ?' । प्रव्रजन्, तथयं दीपे उद्दामं, नगराद् बहिः, पुरद्वारे परावृत्य, बाहुमुद्यम्य दक्षिणं–जगदर्दकृतियन्त्रदीक्षितः, अभयघोषरद्वाक्विकीरलनैः , "जननमरणयोर् अदृष्टपारः , न पुनरहं कपिलाह्वयं प्रवेष्टा" ( अश्वघोषकृत बुद्धचरितं ) ।

परिव्रज्य, तपस्तप्त्वा, योगिनां आश्रमेषु, सः सांख्ययोगरहस्येषु दीक्षितोऽभूद् हिमालये । स्मृत्वा पुरातनीं विद्यां, अभ्यस्तां पूर्वजन्मसु, निहितां पिहितां मर्यां वेदेषूपनिषत्सु अपि,प्रत्यक्षीकृतवाँस्तां च दिव्यैर्योगप्रसिद्धिभिः । (२००) । गृहस्थानां, यतीनां च, ततो धर्मान् उपादिशत् च,अशयस्य ह्यनुसारेण मनोर् एव हि, नान्यथा । जन्म, कर्म,-स्य दिव्यं च,अभूत्, कृष्णस्य यथा पुरा—"बहूनि मे व्यतीतानि जन्मानि, तव च, अर्जुन !, तानि अहं वेद सर्वाणि, न त्वं वेत्थ, परंतप !" (गी०) ।

गंगायमुनयोस्तीरे उत्तरे, दक्षिणे तथा, चत्वारिंशत् च पंच-मपि वर्षान्, उपदिशन्, भ्रमन्, जन्म-वर्णाग्रहं नित्यं, प्रधानं पातकारणं, भारतीयसमाजस्य, युक्तिभिः समखंडयत् । न ज्ञानकांडं वेदानां, कर्मकाण्डं तु अपाकलयत्; यथैव, पूर्वं, गीतायां, कृष्णरूपेण तत्कृतं । स्मर्तव्यं अत्र यद्, विप्राः विद्वांसोऽपि च मन्वते कृष्णस्यैवावतारोऽभूद् बुद्धनाम्ना, कलौ, इति । ॥ वर्णाश्रमधर्मान्, *स कदाचन निनिन्द सः, प्रत्युत-स्योपद् एव एतान्, यथा वै कृष्ण जन्मनि* ; कर्म-वर्णान् चतुर्थो सः, न पुनर्जन्मना, जगौ; सुवंश्च बहुभिः श्लोकैः सत्य-ब्राह्मण-लक्षणं, पुनः पुनर् उवाच सौ, "तं अहं ब्रूमि ब्राह्मणं"; तथा 'ब्राह्मणवग्गो' हि, ग्रन्थे 'धम्मपदे' स्मृतः, बुद्धोक्त-पालि-गाथानां संग्रहेऽभिमते सतां, (२१०), गीता-वद् अपि यो ग्रन्थः सारवान् प्रथितो भुवि ; 'क्षत्र विट् शूद्र'-वर्णानां नामान्यपि च सोऽवदत्, यथा 'ब्राह्मण'-नाम इति, स्वभाव-गुण-कर्मतः ।

*तथा* 'सुत्त-निपाते' च, 'सुत्ते ब्राह्मण-धम्मिये', ब्राह्मणैः कैश्चिद् आलापो, बुद्धस्य एवं हि वर्णितः, योऽनाथ पिंडिकारामे ऽभवज् जेतवन ाभिधे—

"वृद्धा कोसलदेशीया ब्राह्मणा समुपागमन् बुद्धं केचिद्, अपृच्छंश्च, 'मन्यते वा, न वा, भवान्, यद् अत्र धर्म-कर्त्तारो ब्राह्मणा सन्ति साम्प्रतं ?' । बुद्धस्तु अवोचन् 'न एतादृगृषिरत्र कश्चन दृश्यते, ऋषयः संयत आत्मानः पुराऽभूवँस्तपस्विनः, कामं च ऐन्द्रियकं हित्वा हि, आत्मलाभार्थं आचरन्; हिरण्य पशु धान्यानां न ते सञ्चयकारिणः, ज्ञानं एव धनं धान्यं तेषां, वेदो निधिर् महान्, सादरं भाषितैर् अन्नैः, श्रद्धयादिभिस्तथा, शुद्धान् यज्ञान् विधायापि, जीवनं निरवाहयन्; परस्त्रीगामिनो नैव, न स्त्री विक्रयकारिणः, न गावो, न ह्यपशवो, अहिंस्यन्त, परं शुभ-इष्टिषु, यथा माता, पिता, भ्राता, ज्ञातयो ऽन्येऽपि तादृशाः, गावो न परम मित्रं, ददते परमौषधं क्षीररूपं, यद् एव अन्न बल वर्ण सुख प्रदं, (२२०), इत्यर्थं सुपरिज्ञाय, गास्तु अहिंसन् नैव ते। सुकुमारा, महाकाया, वर्णवन्तो, यशस्विनः, ब्राह्मणाः, श्रेष्ठधर्मिष्ठाः, कृत्य अकृत्य विवेकिनः, यावल् लोकेषु अवर्त्तन्त, प्रजा हृष्टा समेधिरे। तेषां आसीद् विपर्यासो, दृष्ट्वैवं, अणुशोऽणुशः, दृष्ट्वा राज्ञां वर्धमाना नारी हर्म्य-आदि-लालसा। मन्त्रान् प्रक्षिप्य, वेदेषु, हिंसायज्ञविधायकान्, स्वर्गेऽपि ऐन्द्रिय भोग आशा-लोभैः, प्रालोभयन् नृपान्, स्वेभ्योऽपि अदापयन् यद्वा तेषु यज्ञेषु दक्षिणा, गाश्च, शय्याश्च, वस्त्राणि, नारीश्च समलङ्कृताः, रथांश्च वाजिसंयुक्तान्, रम्याणि भवनानि च, नानाधान्यैः पूरितानि, विविधानि धनानि च। क्षीरं उत्पद्यते यस्मात्, रसादिषु स्यात् तद् आमिषं, इति प्रतर्क्य, ते भूरि गोमेधं चापि अकल्पयन्, घातितानि सहस्राणि नृपैर्विप्रैर्गवां तथा" (सुत्तनिपाते ब्राह्मण धम्मिय सुत्त)[1]। अशीतिवर्षवयाः प्राप्य बुद्धो देहं व्यसर्जयत्।

कियान् महान् हि बुद्धस्य गो सद्धिम समादरो ऽभवद्, एतादृशैर्वाक्यैर् दृश्यते तद् विनिश्चितं, समये तस्य गोहिंसाऽभूद् यज्ञेषु इति वै तथा; भारतेऽपि यथा रन्तिदेव यज्ञस्य वर्णनं, तथा उपरिचरस्यापि वसोर् आख्यानकेन च। (२३०)।

इदमपि आह सम्बुद्ध, "व्याधयस् त्रय एव हि, पुराकालेऽभवन्—तृष्णा (तृषा), बुभुक्षा च, जरा तथा, पशूनां हिंसनैर्, मांसभक्षणैः, ते सहस्रधा (अभूवन्), एवं धर्मे तु व्यापन्ने, विप्रक्षत्रिययोर्भृशं, वैश्याः, शूद्राः, स्त्रियश्चापि,

१—अस्मिन् उद्धरणे, मूलपालिभाषा, भाव शब्दशः, संस्कृतयाऽनूदिता।

व्यग्रियन्त समतत । उत्पत्ति क्रूरयज्ञानां एव बुद्धेन वर्णिता ।

"मुनेरपि वनस्थस्य, स्वकर्माण्यनुतिष्ठत ,उत्पद्यते त्रय पक्षा मित्र उदासीन शत्रव " (म० भा०) , किं पुना राजसूयेन, गर्व स्मय मयेन च, राज सूया करेण एव, सर्वराजोपतापिन , विजये ,चक्रवर्तित्व आरम्भोद्, बलेन वै , मयेन निर्मिता श्रद्धा, सर्वआश्चर्यमयीं सभां, कर्णदुर्योधनादीना भयविस्मयकारिणीं, अध्यासिनो (अधितिष्ठत ) अतिमानेन,अगारीर्ष्याप्रसारिणीं । एतत्फल 'विश्व-युद्ध पश्यता एव युधिष्ठिरो वर्जितो नारदेनापि , न मेने सविद् हि ता ।

ईदृशैर्हेतुभिर् न इष्ट बहुसम्पत्तिसञ्चय , प्रदर्शन च दर्पण समृद्धे स्वस्य सर्वत , परेषां पीडया चापि, बलेन च विशेषत , क्षत्रियेणापि , विप्रेण किंपुनस् त्यागधर्मिणा । (२४०) । युद्ध निदर्शन तत्र विश्वामित्र वसिष्ठयो , तथैव कार्त्त वीर्यस्य जामदग्न्येन सगर ।

प्रत्यक्षीकृत्य त सर्व इतिहास पुरातन, बुद्धाद् बहुसमा पूर्व, कृष्णद्वैपायनन च, तादृशैरेव शब्दैस्तु बहुश शान्तिपर्वणि, सद्विप्रलक्षण प्रोक्त,' त देवा ब्राह्मण विदु ", श्लोकास्ते पूर्व अत्रापि विस्तरेण समुद्धृता । अन्ये चापि तथा वर्गा लक्षिता गुणकर्मभि , जन्मवर्णआग्रहश्चापि धर्षितो हि महर्षिभि ।

साक्षात्कृत्य तु सर्वाणि वस्तूनि, स , तत्त्वत , गौतमो, 'बुद्ध ' इत्युक्त , 'सम्यक् सम्बुद्ध ' एव च, निराकरोत् चण्डाटोप 'रहस्य ज्ञ'वरादिनां, शमादि गुणहीनाना, जनवञ्चनकारिणां, कृतो हि , अन्यतश्चापि, सद्वेदार्थविनाशिना, मास सोम-सुरा इष्टूना, हिंसा यज्ञ प्रचारिणां, रूपके शिवरूपस्य, यत् पुराणे निरूपित, विवर्य शुभ अर्थ त, घोर तथ्य पिपासिनां---( 'सोमो' 'अमृत , 'सुधा', चन्द्र ', ब्रह्मचर्येण सभृत 'शुक्रो ( क ) यो द्योतते भाले योगिना ऊर्ध्वरेतसा, इन्द्रियाणां हि देवाना यश्चास्ति आप्यायक पर , ओजोमय , तिरस्कृ त्य त, ते, 'सोम', सुरामिव, वनौषधीम्यश्चकृषु , 'पान', मादकमेव यत् (२५०) "इन्द्रोऽमाद्यत सोमेन" इत्येवमस्ति च वर्णित भङ्गा(भाँग)विकारमेवैन सोमं केचिद् वदति हि )---एतादृशानां दौरात्म्य भगवान् अवरुद्धवान् ।

बुद्धो विश्वजनीनोऽथ, दयया परया ईरित , भ्रमतो भव टव्यो, रुद्धानां च वृकैरिव, प्राकृताना जनानां हि कल्याणायैव चाकरोत् प्रचार, भाषया पाल्या, तत्काले सर्वबोध्यया, सनातनस्य, शुद्धस्य, वैदिकस्य, मनोरपि हि आर्यधर्मस्य,

'आर्य सत्यैः', आत्मविद्या प्रतिष्ठिते[1], यथा पुरा हि यासपि शुको, व्याससुत, प्रभु', "य स्यालुभावं,अखिलश्रुतिसार,एक अध्यात्मदीप, अतिगन्तुधिया तमोऽन्ध संसारिणो करुणयाऽह पुराणगुह्य", (भा०) अद्यापि येन मनुजा सुगति लभन्ते।

मानवान् उद्धिधीयूंश्च, महाकारणिकान् मुनीन्, कृष्णान्, व्यासान्, जिनान्, बुद्धान्, मूसान्, ईसान्, मुहम्मदान्, ज़र्दुस्त कद्फ़ुत्स अर्दींश्च, सर्वान् सद्धर्म-देशिकान्, उत्कृष्टचरितान् शुभान् लोककल्याणसाधकान्, प्रणमामो वयं भूयो, निःस्वार्थान्,तपसा वज्ज्वलान्,भारते वाऽन्यदेशेषु जाता लोकहिताय ये।(२६०)।

नेदऽाह बुद्धो किंचिद् यत् न वेदान्तोपनिषत्स्थित, यद्वा न मनुना प्रोक्त, इत्व यद् मम धर्मयो, केवल तु पुराणार्थान्, निर्वीर्यान् जरया कृतान्, रोग ग्रस्तान् अपभ्रष्टान् कुवल्पऽासविभिर्जनैः, नवीकर्तुं, नवान् शब्दान् पुनश्च प्रायुक्त सोऽत्वर् ! पुराणानपि शब्दान्स आदरेण समादधे यत्र तत्र स्ववाक्येषु 'उद्दानेषु

1—'दुःख', दुःखस्य हेतुश्च (यो वै 'समुदय' स्मृत ), तन्निरोधन'मार्गश् च (या तु 'प्रतिपदा' स्मृता), ततो 'निरोधो', निर्वाण मोक्षश् चापि उच्यते तु य — आर्य सत्यानि चत्वारि बुद्ध प्रोक्तानि सन्ति वै। तानि एव योगे, वेदान्त चापि, उक्तानि अ यनामभि —बन्धश्च, बन्ध हेतुश्च, मोक्षोपायस्तथैव च, मोक्षश्चापि, परानन्द मुक्ति निर्वाण-नामभि, अपरैर्हेतुभिश्चापि सनाशो य उच्यते। रोगस्य, तस्य निदानं च, हानोपायस्तथैव च, रोगहाण यद् आरोग्य—चतुर्व्यूह सः वैद्यके। अष्टांगिकश्च बुद्धेन मार्गो मुक्तेर् य ईरित —सम्यग् दृष्टिश्च, सङ्कल्प, वाक, कर्मान्तस्तथैव च, आजीव श्चापि, व्यायाम, स्मृति, समाधिरेव च—तत्सव अस्मिंस्त्रितये सम्यग् अन्तर्गत ननु —सम्यग् ज्ञान, सम्यग् इच्छा, या च सम्यक् क्रिया तथा। सम्यग् वर्णाश्रमे धर्मे सम्भवेत् नितय च, तत् अष्टाङ्ग च, विना चापि तेन, तत् तु न सम्भवेत्।

तदेव तात्त्विक तथ्य महावीरजिनेन च, प्रोक्त बुद्धस्यैव काले, उन्यै शब्दैरेव केवल—"आस्रवो भवहेतु स्यात्, मोक्षहेतुश्च संवर, इतीय आर्हती मुष्टि, सर्वमन्यत् प्रपञ्चन"। "अविद्या बन्धहेतु स्याद्, विद्या मोक्षस्य कारणं"—तदेव सत्य वैदेिक, वेदान्तपरिभाषया। कर्म वर्णाश्रमे जैन विश्वास पूर्वमुद्धृत—'कम्मुणा बम्भणे होइ, कम्मुणा होइ खत्तिओ, कम्मुणा वइसो होइ, सुद्दो हवइ कम्मुणा" ( उत्तराध्ययन सूत्र )। ( १३ )।

च यथा हि पदः—"वेदान्तगू वुसित-ब्रह्मचरियो, स ब्राह्मणो ब्रह्मवादं वदेय्य" ; 'वेदान्त गो' हि, वेदानां अन्ते तु भाविता, श्रुता, विद्या यस्तु औपनिषदी प्राप्ता, ऽसौ 'वेद-पार-गः' ; कर्मकांडात्मकाद् वेदात् परे पारे गतो हि यः, ज्ञानकांडात्मकं वेदं, स भवेद् 'वेदपारगः' ; 'उषितब्रह्मचर्यश्च',ब्रह्मचर्यं विना,यतः,विना शमादि-सम्पत्त्या, विना चापि मुमुक्षया, विना विरत्याऽनाचाराद्, ब्रह्म प्राप्तुं न शक्यते। ऋषिरुद्दालको हि स्मरात्, श्वेतकेतुं स्वमात्मजं, प्रशशास दयाबुद्धिः, "ब्रह्मचर्यं वस"इति वै,"कुलेऽस्माकं न भवति कश्चिद् अ-ब्रह्मविन् ननु"। स एव 'ब्राह्मणो" यो हि 'ब्रह्म'प्राप्तो "ब्रह्मचर्यया"; स एव "ब्रह्म-वादं" तु "वदेत्" ; नान्योऽधिकारवान्। (२७०)। ब्रह्मणः प्रकृतो यस्तु निष्ठितः, शाश्वतो, हि सः "धर्मः एव हतो हन्ति, धर्मो रक्षति रक्षितः"(म०)। धर्मे हते हतो योऽभूत् समाजो विगत-प्रभः, धर्मस्त्योजीवनेनासौ, बुद्धेनोज्जीवितः पुनः, सज्ज्ञान-सम्यक्संकल्प सम्यग्-व्यायामचेष्टितैः, अन्यैर् अष्टाङ्गमार्गस्य सर्वाङ्गैश्च, सुशोभनैः ; सत्यवाग्भिः, सदा-चारैः, विश्वस्तैश्च परस्परं,परस्परं च सस्नीग्धा संघनां समुपागतैः, 'संघे शक्तिः' इति न्यायाद् बलवद्वाह्वकर्तृभिः,सामाजिकैश्च विद्वद्भिर् उदारैः समलङ्कृतः।

प्रायः सा सुदशा,बुद्धाद् अर्वाग् ,भारतभूमिषु,द्वादशाऽब्दशतं यावद्,व्यवर्धत दिने दिने; धर्मस्य, अर्थस्य, कामस्य, मोक्षस्य,अध्यापकेषु च,शास्त्रेषु बहवो ग्रन्थाः उत्कृष्टाः निर्मिताः नवाः, प्राचीनाः विस्मृतप्रायाः उद्धृताः प्रतिसंस्कृताः, बौद्धानां वैदिकानां च पंडितैः सु बहु-श्रुतैः ; ज्ञानानि सुसमायाणि भूयोऽप्यन्याहृतानि च; नागार्जुनो महाप्राज्ञः आयुर्वेदे 'रसौषधान्' पारदादिप्रभूतान् प्रादुश्चक्रे महौजसः, चक्रे चाप्युत्तमं ग्रन्थं स 'माध्यमिककारिकां', ब्रह्म यस्मिन् अनिर्वाच्यं तावतः प्रतिपादितं (२८०)। "अनिरोधं अनुत्पादं, अनुच्छेदं अशाश्वतं,अनेकार्थं अनानार्थं, अनागमं अनिर्गमं, न सन् , नासन् , नसदसन् , न चाप्यनुभयात्मकं, चतुष्कोटि-विनिर्मुक्तं तत्त्वं माध्यमिकाः विदुः। अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतं, अनिरुद्ध-मनुत्पादं एतन्निर्वाणमुच्यते" ( माध्यमिक कारिका )। 'संहितायाः', प्रसिद्धायाः 'चरका'भिधयापि, च निर्मातारं, वदन्त्येके बौद्धमार्गानुयायिनं। चताः सुमाश् चतुःपष्टि कलाप्रन् लक्षिताः पुनः ; सद्गुणमेषु चाधावन् भाजि बौद्धाश्च वैदिकाः; पतंजलिर्महाभाष्यं सुप्रसिद्धं विनिर्ममे,वात्स्यायनः कामसूत्रं; अर्थशास्त्रं च कौटल्यः; पंचतंत्रं विष्णुगुप्तः ; भाष्याणि विविधानि च, षड्दर्शनानां सूत्राणां मुनयो मन-

नैर्नवैः। साम्राज्यं चापि मौर्याणां,गुप्तानां चापि, दिद्युते ; चंद्रगुप्तोऽतिशिष्येऽभ्यात्, शिष्टचाणक्यमंत्रिणा ; चंद्रगुप्तस्य पौत्रोऽभूत्तस्य योऽशोकवर्धनः,सत्यं अन्वर्थनामा सः लोकाशोकस्य वर्धनः ; आंग्लाः अपि इतिहासज्ञाः मुक्तकंठं वदन्ति, यद् एता-दृशोऽपरो नाभूत्, कुत्रचित पृथिवीतले,आदर्शभूतो नृ-पतिः प्रजाकल्याणकारकः ; (२९०) ; मनुष्याणां पशूनां चाप्यातुराणां हिताय, सः, आरोग्यशालाः तत्कार सर्वप्रान्तेषु भारते ; सर्वत्र कारयामास वाणिज्यार्थं महापथान् ; विद्याशालाः प्रभूताश्च, विहारान् धर्मिणामपि, प्रपाश्चापि अन्नसत्राणि पान्थानां हितकाम्यया, अनाथ-विधवा-बाल स्व(धन)-रक्षण विधीन् अपि, शिलासु लिखितऽदेशान् सदाचार-प्रदर्शकान्, धर्मस्तम्भान् , महास्तूपान् , 'सु-मत'-प्रचारान् अपि, सर्वत्र स्थापयामास, नृ-पो नित्यं अतन्द्रितः ; पुराणेषु श्रुतप्रदर्शान् सोऽतीयाय सदोद्यतः; वस्तुतः पालयामास "प्रजाः पौत्रान् इव औरसान्"; दयाप्रधाने बुद्धस्य धर्मेऽस्य-ऽऽसीन्महादरः। न तत्पदानुगाः हि अन्ये , दौर्भाग्यात्, शासकाः खलाः। रामोऽप्येवं प्रजारञ्जन् च, न शृण्वंति तु भूभुजः-"दुःखेनायं निर्मितो धर्मसेतुर्, नित्यं सर्वैः रक्षणीयो भवद्भिः, मत्वा सर्वान् भाविनो भूमिपालान्, भूयो भूयो याचते रामभद्रः" ।

उज्जयिन्यां ततश्चासीत् संघमुख्यस्तु 'विक्रमः', योऽसौ शकान् परा-जिग्ये ; ऽभूच्च संवत्प्रवर्तकः ; ( ३०० ) ; 'विक्रमादित्य'बिरुद लेभे लोकात् तथोऽज्ज्वलं, यौवकान्ति अति कर्माणि कुर्वाणश्च दिने दिने । कालिदासो-ऽग्रगण्यश्च कवीनामभवत्तदा; नाटकानां त्रयाणां सः स्वकृतानामुपक्रमे, सूत्र-धारमुखेनैतां विक्रमस्य तु सूचयन्, उज्जयिन्यां मालवानां सदस्य खलु सुस्पष्टां, निवेदयति यद् 'अहं , आदिष्टस् तस्य पर्षदा , विनोदाय हि सर्वेषां अपूर्वम् नाटकं नवं' ; 'विक्रमोर्वशीयं' इति यत् नाम कृतस्य चाधात्, तद् 'विक्रम'ऽऽदराएव; हेतुर्नान्योऽत्र लभ्यते । पश्चात्, पाटलिपुत्रेऽभूत् प्रविख्यातो महीश्वरः, समुद्रगुप्तः ; कार्श्यां योऽश्वमेधिना ईजे, सदाजयी, यस्त-अश्व-इम प्रतिमा-ऽस्य काश्यां अद्यापि वर्तते, विभ्रती लेखमुत्कीर्णं पार्श्वे, यशनिवेदकः ; दिल्ल्यां च निधराजन-यं महाकीलं अथअयसं, यज्ञयूपं, जयस्तम्भं ; लौहं विक्रियते नहि यस्य-अद्यापि तु, वर्षाभिर्, हिमैर्, वायुभिर्, आतपैः ; वैज्ञानिकाश्च पाश्चात्याः, रहस्यं तस्य निर्मितेः, अन्विष्यन्तो नाप्नुवन्ति ; भारतीयैस्तु विस्मृतं । (३१०),

स्थितान् उत्तरसीमाया करदान् सोऽकरोत् शकान्, दक्षिणान् सिंहलद्वीपात् नृपान् प्राभृत आप च । स्कन्दगुप्त प्रपौत्रोऽस्य हूणान् जिग्ये च नैकधा, चिरमस्य राज्ये बद्धे वैरं वैदिक बौद्धयो, वदति केचिद्, आज्ञा इय अनेनैव प्रवर्तिता, 'आसे तोरादिमाद्रेश्च सुगतस्य मतानुगा अ बालवृद्ध हन्तव्या सर्वभारतभूमिषु', षष्ठस्यास्य शशांकस्य, केचिद्, आज्ञा वदति तां, पुनर्नेवा तां अकृत सुधन्वा चाकरे युगे ।

अस्मिन्नेवान्तरेऽभूवन् विख्याता ज्यौतिषाश्चय, आर्यभट्टश्च, तत्पश्चात् वराह मिहिराभिध, ब्रह्मगुप्तस्तृतीयश्च, प्रसिद्धग्रन्थकारका । हर्षवर्धननामा च महा राजोऽभवत्तत, निष्णातस्यापि विद्यासु, जयिन प्रधनेषु च, साम्राज्य प्रससारास्य चतुर्दिक्ष्वपि भारते, चीनदेशात्, सभा तस्य, यात्री ह्युन्त्साङ् समागत, कृतश्च तेन यज्ञोऽपि, प्रयागे, सार्ववेदस, यस्मिन्, बौद्धाश्च विद्वांसो, वैदिकाश्च, समाहृता, विपुलाभिर्दक्षिणाभि, विद्या सर्वाश्च पोषिता, (३२०), 'नागानन्द' च रचित उत्कृष्ट नाटक शुभ, उदारैरेव सद्भावं सद्गुणैरेव सभृत, तद् लभ्यते, तथैव न्यल कल्पते नाटकद्वय, बाण कादम्बरी कर्ता तस्यआसीच सभा कवि, लिखित 'हर्षचरित' येन, अभाग्यात् न पूरित, स्वदेशभूमिपतिभ्यस्तु पार्थादिभ्यो विशिष्य, त तद्ग्रन्थे महयति, एष, महासाम्राज्यशालिन । एतत् सर्वं तु बुद्धस्य शासनस्य फल बभौ ।

"चरथ भिक्खवे !, चारिक, बहुजनहिताय, बहुजनसुखाय, लोकानुकम्पाय, अत्थाय, हिताय, सुखाय देव मनुस्सान । देसेथ, भिक्खवे !, धम्म आदिकल्याण, मज्झेकल्याण, परियोसानकल्याण, सात्थ सब्यञ्जन केवलपरिपुण्ण परिशुद्ध ब्रह्म चरिय पकासेथ" ( महावग्गो, विनयपिटक ), ('अत्थो'ऽत्र अर्थ, 'हित धर्म, कामस्तु 'व्यञ्जन' 'सुख', त्रिवर्गोऽय, चतुर्थस्तु 'परिपुण्ण' हि 'केवल', परिशुद्ध ब्रह्मचर्य', यत् नि श्रेयस इष्यते)—एव तथागतआदिष्टाद् चरन्तश्चारिका सदा, चान तिब्बत जापान बर्मा स्याम ऽादिनामकान्, तथा दक्षिणकम्बोजान् कोचिन् चीनान् अनामकान्, जवान्, सुमात्रान्, बालीश्च, तत्रस्थान् अपरान् अपि, (३२०) दक्षिणाऽ मेरिकां चापि, तथा हिमनगोत्तरे स्थितान् प्रदेशान्, ईरान ग्रीस रोमादिकानपि, महाद्वीपान् उपद्वीपान् प्रजाभिर्निचितास्तथा, बुद्धानुशासनं धर्मं भिक्षव सम-शिक्षयन्, कीर्ति शुभ्रा भारतस्य वितन्वत समन्तत । दुराचारैस्तु भिक्खूना,

तथा तदनुयायिनां, कालेन, बुद्धशोधोऽपि दोषैस्तैरेव दूषितः, यैः पूर्वं वैदिको धर्मो द्विजातिभिरदूष्यत । अपि 'सुत्तनिपाते' च, "सावित्ती (त्री) छन्दसो मुखं", इति शब्दैस्तु गायत्रीं स्वयं बुद्धः प्रशंसति । यत्तु हिंसा-विधिः क्लिष्टो, बीभत्सोऽश्लीलताप्लुतः, अश्वमेधादियज्ञानां कर्मकाण्डे ऽतिविस्तृते, वेदेषु, कैश्चिद्, दैत्यं कर्म वेदु तु पाप्मना—( यथा उपनिषदि प्रोक्तं, "अकुर्वन् यत् तु देवताः, दैत्यास्तान् पाप्मनाऽविध्यन्"), वाममार्ग-प्रवर्तकैः—बुद्धो जगाद तं ; मान्यं आसीत् शुद्धं तु केवलं; ज्ञानकाण्डं समग्रं च अप्रददेऽनुमुमुदे तथा । जयदेवो जगौ तस्मात्, 'गीत-गोविन्द'काव्यकृत्,(३४०),"निन्दसि यज्ञविधेर्, अहह!, श्रुतिजातं, सदयहृदय-दर्शितपशुघातं, केशव !, धृतबुद्धशरीर !, जय, जय, देव, हरे !" । स्वयं मायावादिभिराक्षेपो बुद्धस्योपरि यः कृतः—'मायावाद-न्यायाद्दैर् अयं दैत्यान् अमोहयत्'—( यथा विष्णुः, पुराणेषु, दैत्यान् त्रिपुरवासिनः ; किन्तु बुद्धेन को दैत्यो वंचितो वा निषूदितः, इति क्वापि न स्पष्टं पक्षस्याक्षेपकारिणः)—तत्सर्वं एकतः क्षिप्त्वा, हृदयं भारतस्य वै, देवव्यासाद् यज्ञहिंसामायां प्रायेण वारयत्, हिंसा-यज्ञाः यथा प्रायोऽलुप्यन्तैव हि देशतः ; दशमं चावताराणां विष्णोर्बुद्धं अमन्यत, विविच्य दूरतो हिंसां, आर्यं धर्मं ररक्ष च, सहस्रवर्षं, बुद्धस्य शासनै सुप्रभावितं ।

संस्कृताधीतिनोऽद्यापि सर्वेऽप्यादौ अधीयते बौद्धस्य अमरसिंहस्य 'नामलिङ्गानुशासनं', यस्याऽऽदिमेषु श्लोकेषु सज्ञाः बुद्धस्य कीर्त्तिताः, तत्पश्चाद् महतो नामपर्यायाः अनुवर्णिताः; गंगादितीर्थस्नानेषु संकल्पः पठ्यते तु यः, तस्मिन् 'बौद्धावतारे' हि शब्दो ऽयमपि पठ्यते; (२५०) । ईदृशव्यवहारेण ज्ञायते, भूयसा, आदरः यो धृतो वैदिकैः, पूर्वं, बुद्धे, विशुद्धसज्जनैः; परम्परा सा ह्यद्यापि ध्रियते, नियता, उत्तमा, यद्यपि ईर्ष्या च विद्रोहः जातः कालप्रवाहतः, बौद्धानां वैदिकानां च, स्वार्थसंघर्षकारणात् । हेतुभिर्विविधैः पश्चाद् अतिमात्रं समुत्थितैः, मुख्यतस्तु तपद्वेष्टणो दोषैः, भारतमानसं, व्यस्मरद् वैदिकान् बौद्धान् धर्मान् आर्यांश्च मानवान्, धम्मायश्चापि कृत्येषु, समाजः पतितस् ततः । "मायावादं असच्छास्त्रं प्रच्छन्नं बौद्धमेव हि"—द्वैतिभिर्लाञ्छितं ह्येवं मतं अद्वैतवादिनां, येषामेव हि ग्रन्थेषु, खण्डनाडम्बरः कृतः केषांचित् सौगतानां तु मतानामेकदेशिनां; षड्दार्शनिकमल्लानां यथैव तु, परस्परं, यथैव शैव-शाक्त-सौर-गाण-वैष्णव-धर्मिणां, एवं विवादः सर्वत्र भेददर्शिभिर्

पृथिनः। अभेददर्शिनां, नूनं, संवादो ह्येव सर्वशः। साधुपीडाकराणां तु 'हिंसा' या 'दंड'रूपिणी, राज्ञा, राजाऽऽज्ञया वापि, न तु धार्मिकपराधिनी, न प्रेरिता वा मौर्येण, सा न बुद्धेन निन्दिता ; (२६०) ; तत्कालीनाः नृपाश्चापि राष्ट्रकार्येषु शिक्षिताः ; दुष्टनिग्रह-शिष्टानुग्रह-नीतिं च दर्शिताः ; उत्पथं यातुकामाश्च केचन, उद्धर्षिताः अपि; प्रजाक्षोपाद्राज्यनाशं, विप्लवं च,-अभिघातमं प्रत्यासन्नं नृपैश्चापि, दर्शयित्वा, निषेधिताः। "पदे पदे संति भटाः रणोद्भटाः, हिंसारसस्तेषु कथं न पूर्यते ?", कस्माद् अजोऽयं खलु सौम्यजीवनो विनाऽपराधं निगडय्य मार्यते ? मृगकोशादिभक्षस्य धर्मं यदि अवकल्प्यते, गो-मेष-अजादिभक्षस्य का दशा भविष्यति ? सुविचारैव, 'दंडस्य' 'हिंसायास्' तु विवेचनात्, अहिंसा-हिंसयोः सम्यक् संवादो संभविष्यति। अपचाररानुभविनी युवबुद्धिर्विवादिनी, अदूरदर्शिनी चैकपक्षस्यैवाऽऽग्रहे रता; सर्वसंवादिनी वृद्धबुद्धिर् महानुभाविनी। "इति नानाप्रसंख्यानं तत्त्वानां कविभिः कृतं ; सर्वं न्याय्यं युक्तिमत्त्वात्; विदुषां किमसाम्प्रतं ?" (सा०) । यथोक्तं, बुद्धघोषोऽपि, कालेन कवलीकृतः।

आसन् रत्नानि बौद्धानां यानि त्रीण्युत्तमानि वै, तेषां अर्थो परित्यक्ता भिक्षुभिश्चानुयायिभिः(२७०)।'बुद्धं' हि, बुद्धिमन्तं हि, श्रेष्ठं बुद्धिमतां ननु, सम्यक्संबुद्धमेवापि, सर्वत्राऽभेददर्शिनं, अर्थात्तु, 'बुद्धि'मेव ह्रं, परमात्मप्रदर्शिनीं, सम्यग्दर्शनसम्पन्नां, 'गच्छामि शरणं' मुहुः ; तद्बुद्ध्या निश्चितं 'धर्मं गच्छामि शरणं' तथा ; तेन धर्मेण सुव्यूढं 'संघं' च विदुषामपि 'गच्छामि शरणं' शश्वत् सर्वकार्ये सहायदं। यो यो हि 'बुद्धः', सम्बुद्धः, महाबोधेन संभृतः, 'गच्छामि शरणं बुद्धं' तं विश्वहितबोधकं ; ईदृशैर्बुद्धिमद्भिश्च यो 'धर्मः' सम्प्रदर्शितः, उपदिष्टश्च, तं 'धर्मं गच्छामि शरणं' मुहुः, अवस्थायाः विवेकेन चधु तं च सदा यते ; ईदृशस्य तु धर्मस्य प्रभावेनैव संहतं 'संघं गच्छामि शरणं' चातुर्वर्ण्यस्वरूपिणं। 'रत्नत्रयं', सुखेन, एतत्, पूजयन्तो, न कर्मणा, व्यभ्रंशयन् बौद्धधर्मं भिक्षवो भोगलोलुपाः, यथेदानीं तु हिन्दूनां 'महन्ता'श्च मठाधिपाः। ऊर्ध्वं गमिष्यति, पतिष्यति वापि अधस्तात्, मध्ये चिराय तु परिष्यति नैव धन्या—चित्तस्य रीतिर् इयमेव हि मानवस्य, किं वा इयमेव प्रकृतिः परस्य पुंसः। सोऽयं सनातनो धर्मः पुरा एवं अवसादितः, कुमारिलेन च पुनः, शंकरेण ततः परं, (२८०), ततो रामानुजेनापि, मध्व निम्बार्क-वल्लभैः, रामानन्देन, तच्छिष्यैः, कबीरादिभिरेव च,

चैतन्येन, नानकेन, तथाऽन्यैर्मराठिकैरपि एकनाथ-तुकाराम मोरो ज्ञानेश्वरैः, अपि समर्थरामदासेन, द्रविडेषु भक्तवरैर् अपि, कैश्चिच्च जैनयतिभिः, चतुर्दिक्ष्वपि भारते, उत्पादितै भक्त्यैव जनताहृदि लीनया, शोधितः, शोध्यते चापि, काले काले स्थले स्थले। चक्र, त्रिकुटि मस्क्वयोर् च यत्रापि, एवमेव हि। मूसा, जर्दुश्त, ईसा च, मेनिस्, हर्मीस्, तथा ड्रूकियस्, पैथागोरस्, साक्रेतीस् च लओत्से स्थविरस्तथा, कन्फ्युसे, स्वान्त्सु, मेङ्त्से च, सच्छिष्या बहवोऽपरे, भिन्नकालेषु भिन्नाभिर् भाषाभि पर्यशोधयन्, नवीने समयाचारे, धर्मसार सनातन, कनान्, ईरान्, फिलिस्तीन, हबश्, ईजिप्ट, ग्रीस च, इटली, सिसिली, गॉल चीन, जापान, स्याम च, इत्यादिदेशेषु, एते वै, महत्तरवाशिका कला, भवसत्त धर्मतश्च, प्राणैर् अध्योजयन् मये, वाल्मीकिरामौ, व्यासकृष्णौ, जिनबुद्धौ यथैव हि, तमेक मानव धर्म भारते प्रत्यपादयन्। ( ३९० )।

आविर्भावास्तु भिद्यते, धर्मसारो न भिद्यते, धर्मास्तु विविधा सन्ति, मूल धर्म सदा एकल, व्यञ्जनानि हि अनेकानि, अध्यन्न तु एकलमेव हि, अभ्यास एक सर्वत्र, शरीराणि पृथक् पृथक्, देहाकार एक एव, लोका यद्यपि भिन्नता अनेकेषु एकतां पश्यन् सम्यग्दर्शनधारिणस्तु ये, सम्भाव्नो सर्वधर्माणां, न धर्मात् परिहीयते, शमयन्तोऽत्र कलहान्, शान्तिमेव प्रसारयन्।

इतिहासे मनुष्याणा काल सोऽयं समागत, सर्व प्रयत्न कर्तव्य धर्म सस्थापनाय वै, ज्ञानमार्गीनधर्मस्य नवसञ्जीवनेन हि। सम्बन्ध सर्वदेशानां यन्त्रैर् वैज्ञानिकैः कृत, वायुयानैर् महार्णवैः सर्वा सीमा विलोपिता, न पर्वता, न वा मरु, न टव्यो, न महोदधि, शक्नुवन्ति पृथक्कर्तु जनान् देशान् परस्पर, सर्वत्र, सर्वदेशीय, समाचारान् गृहे गृहे, वहति 'रेडियो' द्वारा, आकाशवाण्यो दिने दिने, वार्ता तु, 'स्टीमर' 'रेल' अतिमात्र विवर्धिता, लोभेन महता उद्भूता, कामक्रोधैर् कृताऽनुजे, परमअधिकरी जाता, वर्धन्ति हन्त्री यथा पुरा। ( ४०० )। पुराऽहङ्कारदर्पेण, केवल विजिगीषया, 'मन्यस्व जित्त आस्मान, धरणी चापि मे स्पृहा', घोराणि युद्धानि अभवन्, योषाकामेन वा पुन, मध नानि, एकभूभागे। सर्वभूव्यापकोऽधुना, जले, स्थले, तथाऽऽकाशे, युगपत् समवर्तित, प्रभा विनाशको रौद्रो रोरवीत्येव सपर, अतिदेवासुर चापि, राम रावणयोर् अति, अतिवेल लोभ जनितो हि, अति कौरव पाडव। सिपायविरव

स्वार्थं, शासका, धनिनस्तथा शास्तृणामपि शास्तार सर्वराष्ट्रेषु येऽधुना, तेऽति मात्रेण लोभेन विक्षिप्ता, नाशयन्ति त स्वार्थमेवान्धयुद्धेन, सर्वसम्पद्विनाशिना, यदर्थं ईदृशो लोभ, सा एव सम्पद् विनाश्यते । शक्ते, श्रमस्य, प्राणस्य, द्रव्याणा, द्रविणस्य च, शतकोटि-स्वर्ण 'पौंड' मितस्य प्रत्यह खलु, दुर्व्ययो ऽन्योऽन्यनाशाय, युध्यमानैर्विधीयते यस्, तस्य चेन् शतांशोऽपि, परस्परसहायने धीयेत, विज्ञानऽादिष्टैर्वर्मभिर्नतहितैः, न ह्यावश्यविहीन स्याद् कश्चन शरणो (गृहहीनो) ऽथवा, स्वप्रकृत्यनुरूप च कर्म कुर्वन् अवाप्नुयाद् (४१०), उचितां जीविका सर्व, 'स्व धर्म' चापि पालयेद्, 'विश्व धर्म व्यवस्थाया' स्वग् अन्तर्गत भतु, सर्वा च भूमिर् अचिराद् स्वर्गतुल्या भवेदियं । "धर्म एव हतो हन्ति, धर्मो रक्षति रक्षित" (म०), अतोऽसौ लोकरक्षार्थं रक्ष्यो धर्म सनातन । द्विधा प्रवर्तते सोऽयं, 'कुरु कर्म', 'त्यज' इति च, प्रथमोऽभ्युदयाय स्यात्, धर्म काम ार्थ साधक, नि श्रेयसविधाताऽन्य, परमार्थे प्रतिष्ठित । संसारयात्रानियम, त्रिवर्गप्रापको हि य स, सर्वेषा मनुष्याणां, वर्णाश्रमसुपाश्रित, वर्णाश्रमव्यवस्थाऽस्ति, स्वभावगुणकर्मभि, आश्रमस्य चतुर्थस्य धर्म. सन्यास ईर्यते, योऽर्थाय मोक्षरूपाय, परमार्थाय सम्मत, त्रिभ्यो हि पुरुषार्थेभ्यो ऽन्तरेभ्य परतस्तु य । कार्याणां तथैवाधिकाराणां च विभाजने, स्वभावस्यानुसारेण, यथायोग्य, यथागुण, वर्णाश्रमाणां धर्मोऽयं सर्वलोकोपकारक, कलहशत्रु शम यिता, मिथ प्रीतिविवर्धन (४२०)। अतो ह्यस्यैव जीर्णस्य विश्वधर्मस्य' मानवै, सर्वलोकक्षयोद्विग्नै, सर्वलोकहिते रतै, उद्धार्यै सर्वदेशेषु पतितस्य अहर्निशम् ।

उपादिश्यत बुद्धेन 'विश्वधर्मो'ऽयमेव हि, मानवानां अशेषाणा येनोत्पाद्येत 'संघ'ता, अभेददर्शनेनैव ; किन्तु तस्यानुयायिषु, अचिरेणैव भूयोऽपि भेददृष्टि-र्व्यवर्धत, 'हीनयान' 'महायान' भेदो भिक्षुष्वजायत, ततो वामकुलाचारि 'वज्र यान' अजृम्भत, बभूवुर्भिक्षव प्राय शिश्नोदरपरायणा, ध्यायिनां ये विहारास्, ते विहारास्तु विलासिनां ; अतुल्य चापि तुल्य च वसु तेषु अति सञ्चित, रत्नरूप्यो महार्घैश्च, सुवर्णैर् उपाहृत ; तद्भोगानां साधनाय ग्रामाश्चापि सहस्रश, आयाश्च भूरिभूमीनां उत्सृष्टा श्रेष्ठिभिर्, नृपै, उन्नतीभिश्च नारीभिर्, विविधैरपि हेतुभि, अन्योऽन्यस्पर्धया चापि, श्रद्धया जडया तथा, व्यभिचारेच्छया चापि,

एव तत्पश्चाद्दिशिस्सया, सर्वकालसर्वदेशेतिहासे तच्च दृश्यते, भारते च बहुश अन्य 'पन्थेषु' एतत् प्रवर्तते। (४३०)। "स्त्रिय कामितकामिन्य, मूर्खा पूजित पूजका, गतानुगतिको लोको, न लोक पारमार्थिक"। धनाढ्या भिक्षवो ह्येव, नग्नक्षपं, स्त्रियन्त्र यद्, बुद्धोक्तान् यतिधर्मांश्च सर्वानपि विसस्मर, बाणाडम्बर भूयिष्ठान् ग्रन्थान् अरचयन् बहून्, स्वबुद्धिप्रौढिचापल्यदर्पोत्सिक्तास्तथैव च, यावद्दूरतया लोकान् दम्भयन्तोऽविवेकिन, यथैव बहवो वेदानुयायिग्रन्थकारिण। "मत्त मम, जगति, अरन्धसदृशमतिग्राहक, प्रयास्यति पयोनिधे पय इव स्वदेहे नरो", प्रमाणवार्तिके होव धर्मकीर्तिर्विरौति वै। एवं यदा बुद्धधर्मो भिक्षुभिर्जर्जरीकृत, नितान्त पतितश्चापि बुद्धिव्यामोहकारक, कुबेरभूतैर् दुर्बुद्धिवर्गैर उत्पथगामिभि, शिरांसि उन्नमयामासु 'वेद' शब्दानुयायिन पुनस्तदा तु, संस्कृत्य धर्माऽचारांश्च वैदिकान्, ये पुरा विकृता आसन्, तांस्ते प्राचारयन् जने। विकारैस्ते पुरा उद्विग्ना, बुद्ध शरणं अभ्यिता, जना, महात्मनस्तस्य मत्राचारै प्रसादिता, दुर्बुद्ध्या बौद्धभिक्षूणां दुराचारैर् विषादिता कुमारिलादिकान् नेतॄन् जना भूय प्रपेदिरे।(४४०) कलहश्च महान् आसीद् बौद्ध वैदिकयोस्तत, बुद्धान्यप्यभवन् राज्ञा एकयो पक्षपातिना, आह्वयन्त सहायार्थं विपक्षयोऽपि विदेशिन, शक हूणान्, यद्यपीव ऐतिहास्यास्तु वैचन, राष्ट्रशक्तिर्भारतस्य सर्वतोऽस पृथक्कृता, 'हिन्दू'धर्म समाजश्च सङ्कुचेच समन्तत, धार्मविवर्धिनी यात्रा समुद्रस्य निषेधिता, विस्मृत्य यत् श्रियो जन्म मन्थनात् जलधेर् अभूत्, यत्तु रामेतिहासेषु, दुर्गापाठादिकेषु च, समुद्रयात्रा, वार्ताय वणिजा, विजिगीषया क्षत्रियाणामपि तथा, बहुशोऽप्यभिवर्णिता, अन्यदेशेषु आर्यधर्मप्रचारो विरतस्तत, ये धर्मा न तथा शुद्धा, न सर्वाङ्गपरिष्कृता, ते म्लेच्छागमने सार्धं बलिनोऽत्र समागमन्। हिंसा सप्तम शतस्यान्ते, वेदा आक्रान्त मुस्लिम अर्थ सेनापति सिन्धु, तदाढ्य च यस्याशासयत्, आन्तर कलहो, यस्माद्, राजधान्यन्तरे, तदा, राज्ञश्च मन्त्रिणा चासीत्, तथा वैदिक बौद्धयो, विश्वासघाताद् एव तु, युध्यमानाश्च शौर्येण, सैनिका भूमिपालस्य, शत्रुभिर्नो पराजिता, (४५०), म्लेच्छोऽशेखको वर्णि, प्रशासन् राजलेखकान्, 'खड्गप्रहारेणैकेन ग्रीवा कृत्स्ना अकर्त्तयन् भवांधाना', पतस्वारक्, वाहस्य क्षेपणोऽभवन् वृक्षाश्च, कृतिनो, वीरा, बलिनश्च, तपस्विन।

एवं धर्मे समाजे च हिन्दूना जर्जरीकृते, कश्चिद् उत्थापयितु पतित शक्नु

सुधन्वराज-सैन्यं च आसीत् शंकरसहायकं। सर्वदेशे सर्वकाले एवमेव भ्रमा-रयन्, मताग्रह-ज-क्षोभेण-च्युतमार्गाः साम्प्रदायिकाः परस्परं; बभूवुश्च सर्वेऽपि व्य-भिचारिणः। रामानुजीयानां चापि तथा दर्पोक्तिः श्रूयते किल, "गाथा ताथागतानां गलति, गमनिका कापिली क्वापि लीना, क्षीणा काणादवाणी, द्रुहिण-हर-गिरः सौरभं नारभन्ते, क्षामा कौमारिलोक्तिः, जगति गुरुमतं गौरवाद् दूरवान्तं, का शंका शंकरादेर्, भजति यतिपतौ भद्रवेदीं त्रिवेदीं"। एवमेव सदा चक्रं कालस्य परिवर्तते; पूर्वेण निर्मितं यत् तन् नवो बाधितुमिच्छति ; शास्त्राहंकृति-मत्सु एतत् , तथा शस्त्राभिमानिषु, (प्रजाहितेषु न त्वेतत् ), दृश्यते विजि-गीषुषु। प्राचीनं रक्षयंस्तश्चेद् यत्तु सुन्दरमुत्तमं, रचयेयुर्नवं रम्यं, सर्वं रम्यं जगद् भवेत्; न सुबुद्धिर् यतः सा,अतः, शास्त्राणां च, पुराम् अपि, भग्नावशेषैः सर्वत्र व्याप्तं हि जगतीतलं ; किन्तु दोषाः गुणायन्ते दोषायन्ते गुणाः अपि; दावदग्धं वनं भूयो हरितं वर्धते नवं; (४८०); नियमः प्रकृतेरेष सर्वत्रैवानुभूयते ; कालिदासो ऽपि वक्ति एवं, नवोत्पत्तिं समर्थयन्, "पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यं; सन्तः परीक्ष्यान्यतरद् भजन्ते; मूढः परप्रत्ययनेयबुद्धिः"। न क्षोभेण विना उद्दामं कर्म सम्भवतीह वै; न क्षोभेण विना वीर्यं प्रचरत्यत्र कुत्रचित्; सति क्षोभे, न बुद्धौ स्यात् शान्तता स्वस्थता परा; तां विना, न विवेकः स्यात् सम्यग् रक्ष्य-विनाश्ययोः। कामाज् जनयते ब्रह्मा, क्रोधात्संहरते हरः, व्यवस्थिति-करो ज्ञानी विष्णुर्मध्ये तु सात्विकः। रम्यारम्यौ उभौ हन्ति तामसो भगवान् हरः; उत्पद्येते ततो नूत्नौ रम्यारम्यौ, पुनः पुनः। परन्तु मूलप्रकृतिः, असंख्यलय-सृष्टिषु व्यावर्तमानेषु, एकैव नियमेनानुवर्त्तते। 'विश्वधर्मः' 'स्व'-भावोऽस्यास् चाप्येवं अनुवर्त्तते, बहु व्यावर्त्तमानेषु धर्मेषु च मतेषु च ; कदाचिच्छाद्यतेऽत्यर्थं, मेघैरिव दिवाकरः, प्रकाशतेऽन्यदा चापि ज्योतिषा निर्मलेऽम्बरे। कुमार-शंकरा-दीनां सोऽयं चलः, पुनः पुनः, चर्णजन्मअप्रहाज्जाते. कलहैर् भ्रान्तैर्भृशं विफली-क्रियते; रोगान् नवान् उत्पादयत्यपि; (४९०) हिन्दूधर्मः समाजश्च शाशत्येव दिने दिने। सर्वाणि चान्यराष्ट्राणि, सम्प्रदायास्तथाऽखिलाः, सर्वत्र कलहायन्ते विनाशाय परस्परं। ईदृगविपद्अवस्थायां, सर्वापद्अपहारकः, कर्मधर्मस्य सिद्धान्तः एकः एव उपलक्ष्यते।

## विश्व धर्म कीदृश ?

(३२) प्र० 'धर्मैं ' परस्परद्युभिर् , अधर्मबहुलैर् अपि, स्वं स्वमेव प्रशंसद्भिर् , निन्दद्भिर् अपरांस् तथा, वदद्भि' स्व स्वमेवोच्च धर्मसर्वस्वमेव च, अन्धीकृतस्य सर्वत्र, दृष्ट्वा, लोकस्य, दुर्दशा,'धर्म एव हतो हन्ति, धर्मो रक्षति रक्षित ", एव श्रद्धाय, विश्वस्य, (विश्वास कृत्वा) धर्मप्रभावविरोधिन, इदानीं,'विश्व धर्म' तु प्रचारयितु उत्सुका , 'सद्धर्म ' व्यापयतस्त, दृश्यते कतिचिज् जना । तत्र विप्रतिपद्यन्ते विद्वांसोऽपि अपरे जना , 'विश्वधर्मो न कोऽप्यस्ति, नैव सम्भवति', इत्यपि । कीदृशो निर्णयस्तत्र भवेद् सतोषकारक ?

उ० नाम्ना एव 'विश्व धर्मस्य' विपर्यस्यन्ति ते मृषा, ये तु प्रत्यवतिष्ठन्ते 'विश्व धर्म' प्रबोधने, यद् 'अय सर्वधर्माणा विशेषाणा विनाशक ' । ( ५०० ) । इय तु महती भ्रान्ति , प्रत्युत, अय पर सुहृन् सर्वेषामपि धर्माणां, विवादपरिहारक , सम्वादकारकश्चापि, देश त्वस्था विवेचनै , शब्दानां भिन्नभाषाणा एकार्थत्वप्रदर्शनै , भेदस्यापि समन्वस्य स्वभावाना च मननै । विपरीतास्तथा भ्रान्ता अपि स्वीकुर्वते, स्वय, यद् 'वेदान्तस्य सिद्धान्त , परमात्म निबन्धन , सर्वेषामपि धर्माणां सारो, हृदयमेव, वै, "इज्या आचार दम अहिंसा-दान-स्वाध्याय कर्मणा, अय तु परमो धर्मो यद् योगेनात्मदर्शन ' (या० स्मृ०) , "सर्वेषामपि चैतेषां आत्मज्ञानं पर मत, तद्धि अग्र्य सर्वविद्यानां ( धर्माणां ), प्राप्यते हि अमृत तत " ( म० ) , धर्मसार स एव हि 'विश्व धर्मो' हि, न अपर , अस्यैव सम्प्रचारेण कलह शान्ति मृष्यति सर्वेषां सम्प्रदायाना, विशेषोऽपि न हास्यते, कश्चित् , कस्य अपि, यो न स्याद् अन्यस्य प्राणघातक , पापाना अपराधानां कलहानां च वर्धक , यथा, कश्चिद् 'विशेष ' चेद् 'धर्मो' नृ बलि-कारक कापालिकानां रौद्राणा महामांसाशिना अपि , वामप्रचाररताना वा व्यभिचार प्रचारक , वज्रयाननिपक्काना वा सर्वाऽकुलकारिणा ,[1] ( ५१० ), क्षीणानां

१—'गाइकवाड़ संस्कृत सीरीज्'-नाम्न्यां ग्रन्थमालायां, १९३१ ई० वत्सरे, 'गुह्य समाज तन्त्र', 'तथागत-गुह्यक' इत्यपराभिध ग्रन्थ प्रकाशित । तस्मिन्, वज्रयानि बौद्धानां अतिबीभत्सा पापिष्ठा घोरा विचारप्रचारा वर्णिता । समाजस्य उपकार कृत तस्य प्रकाशनेन । अन्धकारप्रियाणि आत्मच्छादकानि तामसानि निशा

मद्यपानेन, 'ठगानां', दस्युधर्मिणां, भवानीपूजनान्ते वा, सार्वलुठनकारिणां, घोरं विश्वासघातेन यात्रिणां प्राणहारिणां, श्रेष्ठम्मन्योऽपि यो 'धर्मो' ऽपर ऽक्षारो विनिन्द्यः छलेनैवान्यधर्माणां विनाशाय समुद्यतः, ईदृशाः खलु ये 'धर्माः' लोकसंग्रहनाशकाः, विद्वेष्टारश्च लोकस्य, लोकेनापि तिरस्कृताः, महा

---

चराश्चि पापरत्वाच्छि, यावत् सूर्य प्रभांशे बलाद् आकृष्य न म्रियन्ते, तावत् न अप हन्यते। तस्माद् ग्रन्थात् निपतुर्वाक्यान्येव निदर्शनार्थं अत्र उद्ध्रियन्ते—

'विण्मूत्रशुक्ररक्तादीन् देवतानां निवेदयेत्, एवं तुष्यन्ति सम्बुद्धा बोधिसत्त्वा महाशयाः" (४ पटले); "अथ अस्मिन् भाषितमात्रे, सर्वकन्या, महर्षिणः, मुक्तकेशा, विवस्त्राश्च, वज्रसत्त्व अनुस्मरन्, वज्रसत्त्वपदादारभ्य सर्वतथागताधिपं, यशः सुरापानेन वज्रक न्याकर्षण परः" (१४ प०)। (एतत् तु, शङ्कराचार्यस्य 'आनन्द लहर्यां' एकं श्लोकं स्मारयति, यथा, (१०), "नरं वर्षीयांसं, नयनविरसं, नर्मसु जडं, तव पाङ्गालोके पतितं, अनुधावन्ति शतशः, गलद्वेणीबन्धाः, कुचयुगलविस्रस्त सिचयाः, हठात् त्रुट्यत्काञ्च्यो, विगलितदुकूला युवतयः)। "विण्मूत्रार्द्रगतं वज्रं, पूतिगन्धि, जुगुप्सितं, प्रारभ्य मन्त्रमावर्तेत, क्षुभ्यते म्रियते क्षणात्, लिङ्गं पादेन चाक्रम्य पुनः क्रुद्धोऽपि नश्यति, शताष्टवाराञ्जप्त्वा, वज्रसत्त्वोऽपि शीर्यते" (१४ प०)। "ॐ अनलार्कारथ हूँ हूँ मोह मोह सह सह हृद हृद मोह मोह सह सह हन हन दह दह तह तह तिष्ठ तिष्ठ आविश आविश महामत्तपालक धुन धुन तिथि तिथि किथि किथि धुव धुव हुव हुव छिन्द छिन्द भिन्द भिन्द फट् फट् फट्" (१४ प०)। (ईदृशा अनेके मन्त्रा तस्मिन् ग्रन्थे लिखिताः, सर्वेऽपि उन्मत्तप्रलापाः, वानरचीत्काराः एव, यथैव 'हिन्दू'-हुवाणां वाममार्गि तान्त्रिक मान्त्रिकाणां)। 'शुक्रं वा, अथवा विष्ठां, अभिमन्त्र्य विधानतः, भक्षयेद् वज्रयोगेन, एवं सिद्धिर्न दुर्लभा। हस्तिमांसं, हय- मांसं, महामांसं (नरमांसं) च भक्षयेत् क्षुधार्दितः सर्वमनासा एवं तुष्यन्ति नायकाः। विण्मूत्रं च महामांसं समभागं तु कारयेत्, शरावसम्पुटे स्थाप्य बुद्धैः सह च सवसेत्" (१५ प०)। (२०)।

अहो धाष्टर्यं, अहो दम्भ, एषां प्रथम-रचना। ईदृग् नारकिणां पूर्वं आसन, सन्ति अपि साम्प्रतं, सम्यक् प्रकाशनं चैषां, स्थापनं च महावने, प्रजाहिताय वर्त्तव्यं तीक्ष्णं दण्डनमेव च। (२२)।

अनेन ाभिशप्ता, प्रजोद्वेजनकारिय, यथायत प्रकाराच्च न्याय वा लोकभीरव, यथा 'ठगा', यथा।वापि 'वाममार्गानुयायिन'—ते सर्वे 'विश्व धर्मेण' विरोध्या स्युर् असंशय ।[१] नैव वदति कश्चिद् यै, 'विश्व धर्म' प्रबोधक —'वस्त्र ईदृशमत्र एव वसान, अन्यज् जहीहि च', 'तप्तमुद्रादि पुण्ड्रादि रुद्राक्षादि एव लक्ष्म वै

१ राजस तामस-वासनाभि दृढा ग्रस्त, तासा वासनानां आवरण विक्षेप शक्तिभि आवृतनेत्र विक्षिप्तचित्त, स्वयमेव मोहान्धकारगर्ते निपतित प्राकृतो जन, त जन तासा एव वासनाना अधिकाधिक उत्तेजकै, पापिष्ठैरश्लैः छलकपटदम्भपूर्ण मायिभि शब्दैः, घोरतर प्रतार्य, घोरतमे अधतामिस्रे महानरके निपातयति एते पापिष्ठा मनुष्याकारा सर्वव्याघ्रमर्कटा। पर्यनुयुक्ताश्च, सद्भि ज्ञानिभि तपस्विभि प्रजा हितचिन्तकै अभियुक्ते, तान् अपि छलयितु, स्व च रक्षितु महायोगित्वेनापि स्व प्रमाथ यितु, एते कूटकपटिन वदन्ति (यथा 'गुह्य समाज-तन्त्र'स्य अष्टादश पटले अन्तिमे) 'एतत् सर्वं रहस्यपूर्णं विषय, अश्लील शब्दैं, शिष्य चित्तपरीक्षार्थं प्रतिपादयामो वय, (१०), यदि शिष्य, न वञ्च्यते, न प्रतार्यते, एतेषा शब्दाना स्फुटार्थे, अपि तु स्थिर मति सन्मार्गे दक्षिणमार्ग-निष्ठ, दृढहृदय, सत्यकाम, तत्त्वजिज्ञासु सिद्ध्यति परी क्षया, तदाऽस्मै एतेषां शब्दाना रहस्यार्थं शिक्षयाम' ।। एव एते क्रूर् धूर्ता स्व पापच्छादनाय जल्पति। कि पुनस्तद् रहस्य ? न मनाग् अपि रहस्य, प्रत्युत नितान्त प्रकट, सर्वोपलभ्य-वेदान्तोपनिषत् साङ्ख्य योग शास्त्र पुराण ग्रन्थेषु, विस्तरेण प्रति पादित, सन् शिक्षाम्नूला वैधनय। एवमेव, वैदिकसम्प्रदायेषु, शाक्त-उपासकेषु वाम मार्गीया, वाम तन्त्र प्रणेतार, पञ्च-म कार पूजका, घोर दुराचारिण, पापिष्ठा, द्विज ब्रुवा, विमूढान् जनान् अधिक विमोहयति, स्वेषा विविध-दुर्वासना पूरणाय (२०), पर्यनुयुक्ताश्च, पञ्च म-काराणा 'रहस्य' अर्थं आडम्बरेण व्याख्याति धृष्टा। अन्य धर्मानुयायिष्वपि, मुसलमान क्रिश्चन यहूदी आदिष्वपि ईदृशा सन्त्येव। एतत्सर्वं, पञ्च म कार-वर्णन सम्बन्धे, अत्र मानव धर्म-सार ग्रन्थे, पूर्वं विस्तरश प्रतिपादित। यावद् उच्चैर् उपरारोह, पातस्तावद् अधो भवेत्। अमृतौ पार्षदौ विष्णो दैत्यौ चैवापि राक्षसौ। मद्यविरत अपि प्राप्य, शमेन च, दमेन च, प्रत्याहृत्तो, मृषाकान्तस् तृष्ण या, भोगलिप्सया, न शक्तश्चेन्द्रियाणां ि वेगं धारयितु बलाद्, प्रश्येद् दक्षिण मार्गात्तु, पतेद् वामे च दारुणे, "माता, स्वसा, दुहिता वा", पराक्रन् मिथुनीभवेद्

अस्यैव सम्प्रदायस्य धारयस्व सदैव हि', 'उपासस्व सच्चा एव त्व', 'नमाज जप केवल', 'गायत्र्यास्तु प्रकारेषु विद्यातिषु एत एव हि, सूर्ये विष्णु राम-कृष्ण दुर्गा काली नृकेसरी गणेश रुद्र घोरादि देवतेषु एत एव हि, सर्वात्मना जप त्व वै, सर्वान् अन्यान् विसर्जय', (५२०), ( गायत्रीं त्रिपदा आहु , केचिद् आहु चतुष्पदा, केचित् पंचमुखीं आहु , ओंकारमेव चापरे, पादांश्च विविधान् आहु , स्वरूपाण्यपि विविधं तथा )', 'अर्चेय एका राममूर्ति', 'मूर्ति कृष्णस्य केवला',

---

विद्यां च मङ्गयेद्, बुभ्रवानी, कापालिकी, यथा। उक्त पुराणे, 'काश्या तु मरणात् मुक्तिरिष्यते', तथैव 'काश्या पापात् च भवति ब्रह्म राक्षस', (२०), अस्यायमर्थ न एवास्ति—'काशी' तु आत्म प्र'काशि'नी बुद्धिरेव, अथ ता प्राप्य, स्वग देहे तु, मुच्यते, ता लब्ध्वाऽपि चरन् पाप, पापयोनिषु वध्यते। पुन पुनश्चादिशति तस्माद्धै भगवान् मनु, "आश्रमाद् आश्रम गच्छेत्", सध्यमाऽऽवृत्ति आश्रिता भ्रान्तेरिय, शातचित्त, गार्हस्थ्ये च, वने तथा, नैव अपक्वकषायस्तु, सन्यास कुर्वत भवेत्।

यथैव, सर्व देशा काल जातिषु पुण्यानां पुण्यकारिणा च साहश्य, तथैव पापाना पापकारिणामपि। एकदा बालमुनि परमकारुणिक शुक, ससारे भ्रमता, अथ तम अविदितीर्थेना, मनुष्याणां तारणाय, भगवान बहु-सत् शास्त्रपूर्ण पुराण सारक वक्ति, अपरत शुक हृदय वाममार्गी, प्रथा मारक नारक, पंच-म कार-तत्र ब्रवक्ति। किंतु, 'यत धर्म, परात्माऽत्र, यतात्मा,ऽत्र भुवो जय', "अत्युग्रपुण्यपापाना इहैव फलमश्नुते। न अधर्म चरितो यत सद्य फलति, तत्र वै, शनैरावर्त्तमानस्तु कर्त्तु मूलानि कृतति" (म०), (४०), "नेहाभिक्रमनाशोऽस्ति" धर्मस्य च कदाचन (गी०), "धर्माद् अर्थश्च कामश्च, मोक्षश्चापि भवेद्, ध्रुव", तस्मात् मनुष्ये सर्वस्तु नि य सेव्य स एव वै। "सत्यमेव जयते, न अनृत"। (२५)।

२—"एकाचर पर ब्रह्म, प्राणायाम पर तप, सावित्र्यास्तु पर नास्ति, मौनात् सत्य विशिष्यते" ( म० ), ॐ इत्येकाचर ब्रह्म, सावित्री अस्मात् प्रसूयते, त्रयो ऽस्या अर्पिता पादा, सुखऽभ्युदयिका हि ते—"ॐ भूर् भुव स्व तत् सवितुर् वरेण्य भर्गो देवस्य धीमहि, धियो यो न प्रचोदयात् ॐ", भूर्लोके, च भुवर्लोके, स्वर्लोकेऽपि तथैव च, तिसृष्वपि हि अवस्थासु, जाग्रत्-स्वप्न सुषुप्तिषु, अव्यक्तानि, व्यक्त व्यक्तानि, तथाऽव्यक्त हि या स्मृत, स्थूलानि, चापि सूक्ष्माणि, बीजा कारणमेव च,

'सीतारामौ जप नित्य , न तौ यो भजते तु, तं, अपि प्रेमार्हं आत्मीय जानीया घोरवैरिण', 'राधाकृष्णौ एव जप, सीतारामौ कदापि नो', 'शिवो महत्तरो विष्णो ', 'विष्णु श्रेयान् शिवाद् अति', 'अहमेव गुरुर्मान्य त्वया, न ह्यन्यस्तु कश्चन', 'एतद् पुस्तकमेवास्ति शास्त्र, नान्यत्तु किंचन'—दुराग्रहन्ति न ह्येव, केचिद् वै 'विश्व धर्मिण' । सर्वोपास्येषु भाति एका ज्योति सा परमात्मन , "तमेव भान्त अनुभाति सर्वं, तस्यैव भासा सर्वमिदं विभाति" ( उ० ), व्याप्त सर्वेषु चैतन्य दृश्यते सर्वनामभि , रूपाणि अस्यैव सर्वाणि, सर्वा अस्यैव च क्रिया , यत किंचिद् अपि उपास्यस्य, यस्मिन् कस्मिश्च वस्तुनि, तत्सर्वं परमस्य त्स्य उपास्य स्यैव विभा शुभा । 'आत्मनस्तु एव कामाय सर्वं अन्यत् प्रिय भवेत्' (उ०)। करोति एव 'विश्व धर्म ' सवाद तु समन्तत । (५३०) । मार्गे हि अभीष्ट एकाग्र, गौणेषु अस्तु यथेष्टता , स्वस्य स्वस्य मतस्यापि दर्शयन्तु सत् ईहिन , भूरि लोको पकारित्व, अन्येषा च ापकारिता, सत् तर्कै , 'वाद' वाग्मिश्च, सदा तत्त्वबुभुत्सया, कोमलै मधुरै शब्दै विनीतै सात्त्विकैरपि, विचारोद्बोधकैरेव, न विश्वस्यारुन्तुदै , न कोपनै रोषपूर्णै , न जल्पैः, न वितण्डया, न राजसैस्तामसैर्वा शब्दैः बुद्धि-विघातकै , मतानि, तर्कांश्च ान्येषा, शृण्वन्तु प्रश्रयेण च, परीक्षन्तां चापि सर्वे शान्तशीतलया धिया ।

---

ये मानवानांभावास्तु, तेषां वै हितकारको हि. श्रर्धभायनपूर्वं तु, मौनश्च त्रिपदाभप प्रवृत्तिमार्गे चलता गृहिणां आर्यशीलिना । चतुर्थोऽस्यास्तु य पाद —"योऽसौ ( श्रय ) असौ ( प्राणे ) पुरुष सोऽहमस्मि"—निवृत्तिमार्गिणा एव "स्वे महिम्नि' निधायक , ' सोऽहं" इति 'अजपा' जाप , श्वास प्रश्वास सतत , सन्यासिनां ▮ गायत्री सा'ऽजपा' इत्यभिधीयते । ( १० ) ।

१ द्वादश्या च त्रयोदश्या शत्या अर्वाक तु विक्रमात्, दक्षिणेऽभवन् भूपा , (१) काकतीयाश्च, (२) यादवा , (३) होयसालाश्चापि, (४) पाण्ड्याश्च, महाकोषा , विला सिन , (१) वारगले, (२) देवगिरौ, (३) आंध्र, (४) तामिले एव च, चतुर्षु एतेषु देशेषु राज्य चक्रुर् अनुक्रमात् । योधाश्चासस्विनस्तेषा, न रणे कुशला पुन , स्वाभाविकेन न्यायेन, "यथा राजा तथा प्रजा" । राजानस्ते नु श्रयुध्यन्त, स्पर्धमाना परस्परं, शिथिला किंतु, अकुशला विक्रान्ते रणकर्मणि । तेषा प्रजाश्च काश्चित् तु जैना ,

पापानि अवश्य निन्दन्तु ( नामग्राहं विना पुन पापिनां तु मनुष्याणां, अन्यत्र ऐतिह्य-शास्त्रत्वात् ), प्रदर्शयन्तु दोषांश्च ये जायन्तेऽन्यधर्मत , तथैव सयत्नै शब्दै , "कथं वा मन्यते भवान्", शिष्टा एव प्रभाषन्ते, स्वमतोक्तेर् अनन्तर, यथा निदर्शित भूयो वेदव्यासेन भारते । आचारस्य प्रवृत्तस्य विना दोषानु दर्शनात्, न निवृत्तिर्भवेत्तस्मात्, प्रवृत्तिर् अपरस्य च , अतोऽत्रैव कृत ग्रन्थे, लेशा तु परिदर्शन, ये दोषा बहवो जाता, 'जन्मवर्ण'आग्रहात् ननु, 'जन्मवर्ण' मतस्यापि धर्ममर्मत्वधारणात्, 'हिन्दू'-नाम समाजस्य सर्यातस्य विघातका । (५४०)। 'कर्मणा वर्ण ' इत्यस्य सिद्धान्तस्य तु ये जना , गुणान्, समाज-सम्राव व्यवस्था-कारिणो, बहून् , नैव गुणन्ति, तस्मिन् दोषान् पश्यति च केचित , अवश्य तान् वर्णयन्तु, विचाराय हि सज्जनै । 'महा जनो', विमर्शान्ते, य पक्ष स्वीकरिष्यति, अधिकेन सुविधेन, देश काल निमित्त त, दोषेणैव लघुकेनापि, स लोके प्रचरिष्यति । एवमेवाभवल्लोके, आचारपरिवर्त्तनं, काले काले, भवत्येव च, भविता च, पुन पुन ।

---

काश्चिच्च तैर्हिका , अन्योऽन्य वैरभावेन सततु विविधं तदा , राजानश्च एकदा एक तु पच अन्य तथाऽपदा, सद आयन् । युद्धे चैव चतुर्दिक्कलहस्तत । सुल्तान् अलाउद्दीन्, अस्मिन् काले दिल्ल्या अधिष्ठित , शुश्राव दाक्षिणात्यानां कृष्ण क्षुण्याशिरांचय परस्पर तथा वैर सर्वथा बल हापक । मलिक् काफूर् नामान सेनार्य प्रैषयत् तत । दुर्बलानि आर्तरभवैश्चतानि अपि जित्वा त , राज्यानि , लुंठयित्वा च महती रत्नसंचयान् मुस्लिमोऽत्य हिंदूश्च, भग्न देवालयान् बहून्, (१०) दिल्ला निवर्त्तते । पश्चाद् ,हिन्दूनां पुनश्चोपत , संगमस्य सुतौ वीरौ, आन्ध्रदेशे सुदीप्तु , नाम्ना हरिहरस् एको,ऽपरो बुक्क इति स्मृत , सायणो माधवश्चापि प्रसिद्धो मन्त्रिणौ ययो , शस्त्रास्त्रकुशलो चापि, शास्त्रेषु निपुणो तथा, प्रवीणौ व्यवहारस्य, राजनीतेश्च, रीतिषु प्रभाव उद्य इ मनेभ्य एतेषां तु, पुनस्तदा साम्राज्य उदभूद्, यत्तु विजय नगर अभिध, सार्धं द्विशतवर्षं तद् दिदीपे बहु विश्रुत, यूरुपस्य इटली देशात्, पोर्चुगल् देशतस्तथा, हिमालयस्य उत्तरत बल्ख (बाह्लीक) देशात्तथैव च, यात्रिणो विजयार्थं तु समाजग्मुर् दिदृक्षन समृद्धि अस्य अनुपमा ; दृष्ट्वा चापि विसिस्मियु , तथाऽऽश्चर्यभरै शब्दै वर्णयामासुर् अद्भुता । लभ्यतेऽद्यापि सौभाग्यात् लेखास्ते

संक्षेपेणैव भूयोऽपि 'विश्व-धर्मो'ऽत्र वर्ण्यते—अमूर्तं चापि मूर्तं च, द्वे रूपे ब्रह्मणो यतः, (३०) तद्रूप-'विश्वधर्मस्य' रूपे द्वे भवतो,ऽपि, अतः। (१) "सर्वभूतेषु येन एकं भावं अव्ययं ईक्षते, अविभक्तं विभक्तेषु"; नानासु,एकं सनातनं; केवलं परमात्मानं, जीवात्मसु अखिलेषु अपि; विशेषेषु च सामान्यं असंख्येयु, एकमेव हि; स भावो 'विश्व-धर्मस्य' अमूर्तः, आभ्यन्तरो,ऽव्ययः। "सर्वभूतस्थं आत्मानं, सर्वभूतानि चात्मनि"; "मां च पश्यति सर्वत्र, सर्वं च मयि पश्यति"; "सर्वभूतस्थितं मां हि, भजति एकत्वं आस्थितः"; (५५०); "आत्मौपम्येन सर्वत्र समं पश्यति सर्वदा" (उप०, गी०); "आत्मवत् सर्वभूतेषु" पश्यन् आचरति प्रियं रिपुषु अपि, यथाशक्ति, मैत्रीं कर्तुं सदा उद्यतः; येन भावेन, सोऽमूर्तं 'विश्व-धर्मस्य' हृद् ध्रुवं। "सर्वाणि अपि च भूतानि आत्मनि एवानुपश्यति,सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते";"सर्वभूतात्मभूतात्मा,सर्वभूताशयस्थित.",आत्मनो-ऽन्यत् न"किंचिच्च जानन् ,"न विचिकित्सते";"सर्वं आत्मनि संपश्यन् , सच्चासच्च, समाहितः, मनोऽधर्मे न कुरुते", जगत्कल्याणं ईहते, स्वस्मिन् परकृतान् दोषान् सहते च प्रशांतधीः, (यावच्छक्यं, गृहस्थस्तु न सहेत-ऽाततायिनो), 'स्वान्' एव हि 'परान्' जानन्, न वैरं कुरुते क्वचित्; भावितो येन भावेन, सर्वभूतहिते रतः—अमूर्तो 'विश्व-धर्मस्य' सारो, हृदयमेव सः।

---

ऽखंडिता. अपि। इतिहासेषु संनुद्रैर् भारतीयैस्तु सर्वथा विस्मृतं यद्, विदेशीयैस् स्मृतिस् तस्यास्ति रक्षिता। सार्धद्विशतवर्षान्ते, षोडशस्य शतस्य च वैक्रमस्य द्वितीयार्धे, राष्ट्रं तत्तु व्यपद्यत, पुनश्चाप्यान्तरैर् वैरैर् ,अतिभोगविलासनैः,(२०), प्रजानां चूपणैश्चापि, क्षीणा चाप्यदन्नैर्मूर्गं, जर्जरो, मुस्लिमैर्भूयः आमूलं तद्धनाश्यत। बुक्के सिंहासनासीने, माधवे चापि मंत्रिणि, जैनानां वैदिकानां च निषेद्धुं कलहान् मिथः, राष्ट्रस्य सर्वप्रान्तेषु राजप्रदेशो हि घोषितः, 'हे वैदिकाश्च !, जैनाश्च !, वैराद् विरमत, अधुना; परस्परं मा चिनुत, रक्षत एव परस्परं; त्यजत अन्योऽन्यविद्वेषं राष्ट्रस्य आपत्ति-कारणं; नहि दर्शनयोर् भेदः कश्चन अस्ति उभयोर् अपि; एकं एव तयोस् तत्त्वं; कलही दंडं आप्स्यति; स्वान् स्वान् विशेषान् आचारान् निर्विघ्नं चरत अपि च !"। शान्तेषु तु वैरेषु, सम्राजा दूरदर्शिना प्रजाहितैषिणा चापि, वारितेषु एवं, आगतं समृद्धिं परमां, राष्ट्रं, कंचित् कालं, महोदयं। (२७)।

श्लोको हि सुप्रसिद्धोऽयं वेदव्यासेन घोषित —
"न विशेषोऽस्ति वर्णानां, सर्वं ब्राह्म इदं जगत्,
ब्रह्मणा पूर्वसृष्ट हि, कर्मभिवर्णतां गत" (म० भा०)।
आदो उत्पत्तिहेतुस्तु वर्णाना कर्म एव हि,
यतस्, तस्मात् तद् एव ह्य वर्णताया नियामक।

ॐ आव्रताद् विश्वधर्मोऽयं समस्ते क्षितिमण्डले, विश्वव्यवस्था चाप्येन सर्वं ग्रैवानुपर्त्तताम्, ॐ। ॐ, येन, सूर्य !, ज्योतिषा बाधसे तमो, जगत् च विश्व उदियर्षि भानुना, तेनास्मद् विश्वां अनिरा अनाहुतिं, अप, अमीवा दुष्वप्न, सुव ! ॐ। ॐ विश्वाहा त्वा, सुमनस सुचक्षस प्रजावन्तो अनमीवा अनागस उद्यन्त त्वा मित्रमहो दिवे दिवे, ज्योग्जीवा प्रतिपश्येम, सूर्य !, महि ज्योतिर्बिभ्रत त्वा, विचक्षण !, भास्वन्त चक्षुषे चक्षुषे मय, आरोहन्त बृहत पाजसस्परि, वय जीवा प्रतिपश्येम, सूर्य !, यस्य ते विश्वासु भुवनानि केतुना प्रचेरते नि च विशते अक्तुभि, अनागास्त्वेन, हरिकेश ! सूर्य !, अह्नाऽह्नानो वयस्या वयस्या उदिहि !, श नो भव चक्षसा, श नो अह्ना, श भानुना, श हिमा, शं घृणेन, यथा श अध्वन् शमसद् दुरोणे, तत्, सूर्य, द्रविण धेहि चित्र ! ॐ

---

## प्रार्थना

ॐ

ॐ महाविद्ये, महामाये, नमस्ते, सविदे, चिते !, शक्तिं देहि, शिव देहि, भोगं, मोक्ष च, देहि म, यशो 'धर्मो'र्जित देहि, बल देहि 'अर्थ साधनं, रूप 'काम्य' तथा देहि, द्विषो 'ऽज्ञानानि'नो जहि ॐ। 'रूप' 'काम' फल देहि, 'बल' देहि 'अर्थ' समच, 'यश'श्च 'धर्म'ज देहि, सौहार्दं धेहि शत्रुषु। गौरी त्व, इन्दिरा च त्व, त्व च शुभ्रा सरस्वती। ॐ सश्रुतेन गमेमहि, मा श्रुतेन विराधिषि ॐ। ॐ गणाना त्वा गणपतिं हवामहे, [कविं कवीनां उपमश्रवस्तव, ज्येष्ठराज ब्रह्मणा, ब्रह्मणस्पते !, आ न श्रृण्वन् ऊतिभि सीद सादन ॐ। ॐ यो न पिता, जनिता, यो विधाता, धामानि वेद भुवनानि विश्वा, यो देवाना नामधा एक एव", ( तस्मै यवो विनतोऽस्य समर्प्यते ) ॐ।

मा भ्राता भ्रातरं द्विक्षत्, मा स्वसारं उत स्वसा, सम्यंचः सव्रताः भूत्वा, वाचा वदत भद्रया ; देवा इवामृतं रक्षमाणाः, सायंप्रातः सौमनसो वोऽस्तु" (वे०)। "यमेनेके वदंत्यग्निं, मनुमन्ये प्रजापतिं, इन्द्रमेके, परे प्राणं, अपरे ब्रह्म शाश्वतं, प्रशासितारं सर्वेषां, अणीयांसमणोरपि, रुक्माभं, स्वप्नधीगम्यं, तं नुमः पुरुषं परं (म०)। यो वै न देवासुरमर्त्यतिर्यङ्, न स्त्री न षण्ढो न पुमान् न जन्तुः, नायं गुणः, कर्म, न सन्न चासन्, निषेधशेषो जयतात् अशेषः। मादृक्प्रपन्नपशुपाश-विमोक्षणाय, मुक्ताय, भूरिकरुणाय, नमोऽलयाय, स्वांशेन सर्वतनुभृन्मनसि प्रतीत-प्रत्यग्दृशे भगवते बृहते नमस्ते (भा०)। यज्जाग्रतो दूरमुदैति दैवं, यदु सुप्तस्य तथैवैति, दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिवसंकल्पमस्तु ; यत्प्रज्ञान-मुत चेतो धृतिश्च, यज्ज्योतिरन्तरमृतं प्रजासु, यस्मान्न ऋते किंचन कर्म क्रियते, तन्मे मनः शिवसंकल्पमस्तु ॐ। तदेजति, तन् न एजति, तद्दूरे, तदु, अन्तिके, तदन्तर् अस्य सर्वस्य, तदु सर्वस्यास्य बाह्यतः ;······अणोरणीयान्, महतो महीयान्, दूरात् सुदूरे, तदिहान्तिके च ;" तत् त्वम् असि ;···त्वं स्त्री, त्वं पुमान् असि, त्वं कुमारः उत वा कुमारी, त्वं जीर्णो दंडेन वंचसि ; जातो भवसि विश्वतोमुखः ( उ० )। नमो नेदिष्ठाय, प्रियदव !, दविष्ठाय च नमः, नमः क्षोदिष्ठाय, स्मरहर !, महिष्ठाय च नमः, नमो वर्षिष्ठाय, त्रिनयन !, यविष्ठाय च नमः, नमः सर्वस्मै ते, तद्-इदं-इति, शर्वाय च नमः। बहलरजसे विश्वोत्पत्तौ नमो विधये नमः, प्रबलतमसे तत्संहारे हराय नमो नमः, जनसुख-कृते सत्त्वोद्रिक्तौ मृडाय नमो नमः, प्रमहसि पदे निस्त्रैगुण्ये नमः परमात्मने। (शि.म. स्तु.) आपश्चामीयचक्षसा मित्रा वयं च सूरयः व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ( ऋग्वेद ५-६६-६ ) ॐ, अग्ने ! नय सुपथा राये अस्मान्, विश्वानि, देव ! वयुनानि विद्वान् ; युयोधि अस्मज्जुहुराणं एनः ; भूयिष्ठां ते नम-उक्तिं विधेम, ॐ (ई०उ०)। म्लानं मुखं भारतदेशवासिनां भूयो भवेत् सुरभि सुप्रभा-युतं, भर्गो वरेण्यं उत्तेजयेत् तथा सवितुः सदाऽखिलजनस्य दोमुर्यां। ॐ।

सर्वस्तरतु दुर्गाणि, सर्वो भद्राणि पश्यतु,
सर्वः सद्बुद्धिमाप्नोतु, सर्वः सर्वत्र नन्दतु।

ॐ

## पाठकेभ्यो निवेदन

अत्रोक्तान् विषयान् मुख्यान् वर्णाश्रमनिबन्धनान्, रचनात् सर्वशकाना, समाजोद्धारकारकान्, बहुश्रमी च शास्त्रेषु, बहुदर्शी, बहुश्रुत, देशस्वाधीनतार्थं य कारावासेऽपि कष्टभाक्, विद्याविनयसम्पन्न, मानवाना सिषेविषु, श्रद्धालुरार्ष शास्त्रेषु, ज्ञानश्च समय नव, अवस्थापरिवर्तज्ञ, कर्मणा ब्राह्मणश्च सत्, आर्षैर् वाक्यैर्मनोर्वाक्यो भाष्यमाण, उदारधी, शब्दनिबंधनैश्चापि सत्तर्कैरुपबृंहितै, ग्रन्थे 'मानवार्षभाष्ये', मध्यमाने तु साम्प्रत, इन्दिरारमणो विद्वान्, विस्तरात् कथयिष्यति। ( अस्य तु प्रथम खण्ड मुद्रितश्च प्रकाशित, शेषाशो लिख्यते, तस्य प्रकाशन अपेक्ष्यते )।



कस्यचित् पठितु चित्त, शब्दै कैरपि कर्कशै यदि अरुन्तुद, आवेशात्, क्षमा तस्यार्थं अर्थये, 'मनो' आभ्यन्तराऽऽज्ञा एव, तस्य चापि सिषेविषा, हीना दीना भृश क्षीणा भारतस्य च या दशा तस्या निवर्तनेच्छा च तीव्रा, ऽावेशे तु कारण, इति ज्ञात्वा बुधा सर्वे, सहृद, सुहृदस्तथा, वाक्कृतान् अपराधाँस्तु क्षमिष्यन्ति, इति याचना, शब्दार्थाना अशुद्धीश्च शोधयिष्यन्ति अनुग्रहात्, करिष्यन्ति च साहाय्य मनुधर्मप्रचारणे ।





( प्रार्थना निवेदन-टिप्पणी वर्धनीय अद्यैव श्लोकै सहिता, अस्मिन् ग्रन्थे समग्रा श्लोका प्राय ६००० )



## उद्धृत-ग्रन्थ-नाम-अनुक्रमणी, संक्षेप-विवरण-सहिता, सपृष्ठाङ्का

( एतत्पूर्वं १-४पृष्ठानि, २६९-२७२ इति ज्ञेयानि )

# विषय-सूचक-शब्द-अनुक्रमणी

( ज्योतिषाचार्य श्री निशाकान्तेन संकलिता )

॥ इति ॥

## श्री भगवद्दास (-डाक्टर भगवान् दास-) लिखिताः ग्रन्थाः

## Works by Dr. Bhagavan Das.

| | | |
|---|---|---|
| 1 | The Science of the Self .. .. | Rs 1 8 0 |
| 2 | The Science of Peace 2nd edn, cloth, .. | „ 3 0 0 |
| | boards, . | 2 8 0 |
| 3 | The Science of the Emotions, (4th edition, in preparation) | |
| 4 | The Science of Social Organisation, or The Laws of Manu, 2nd edn, Vols, I & II, (Vol III in preparation) | |
| | Vol. I, cloth, 2 8-0, boards .. | „ 2 4 0 |
| | Vol II, cloth, 2-0 0, boards, .. | „ 1 12 0 |
| 5 | The Science of The Sacred Word or The Pranava Vada of Gargyayana, 3 Vols ( Out of Print ) .. .. | |
| 6 | The Science of Religion, or The Principles of Sanatana Vaidika Dharma (Out of print, new edition projected) .. .. | |
| 7 | Krishna, A Study in The Theory of Avataras cloth, 2-0-0, boards, .. | „ 1 12 0 |
| 8. | Mystic Experiences, or Tales from the Yoga-Vasishtha (new edn projected) | |
| 9. | Ancient versus Modern Scientific Socialism. Rs 1-8-0 & .. | „ 1 0 0 |
| 10, | *The Essential Unity of All Religions. ( cloth bound, 7_0 pp, cr 8vo ) .. | „ 2 8 0 |
| 11, | *World War and Its Only Cure-World Order and World Religion. (cr 8vo, 650 pp) .. | „ 2 8 0 |

| | | | | | |
|---|---|---|---|---|---|
| 12 *Concordance and Dictionary to the Yoga Sutra & Bhashya, ( words in Skt , explns in English) , | .. | , | 3 | 0 | 0 |
| 13 *Fundamental Psychological Principles of world wide Social Reconstruction ( Pamphlet, 32pp , cr 8vo) | .. | „ | 0 | 4 | 0 |
| 14 Communalism, Its Cause and Cure | | „ | 0 | 4 | 0 |
| 15, Ancient Solutions of Modern Problems | . | , | 0 | 8 | 0 |
| 16 *Manava Dharma-Sarah, (Laghu, in Samskrt abridged) | .. | „ | 0 | 8 | 0 |
| 17 *Manava-Dharma Sarah ( Brihat, in Skt., unabridged) Cloth 2 4-0 boards | .. | „ | 1 | 8 | 0 |
| 18 †Samanvaya, (in Hindi) (2nd edition in the press) समन्वय | .. | „ | | | |
| 19 Purushartha (in Hindi, 2nd end in the putt ) पुरुषार्थ .. | .. | „ | 3 | 0 | 0 |
| 20 Prayojana (in Hindi) प्रयोजन | .. | „ | 2 | 0 | 0 |
| 21 †शास्त्रवाद बनाम बुद्धिवाद . | .. | „ | 0 | 4 | 0 |
| 22 Annie Besant and the Changing World | .. | „ | 0 | 4 | 0 |

23 Many pamphlets in English in the Adyar Pamphlets Series, and others in English and Hindi

To be had from the Manager, The Indian Book Shop, Benares City , also, The Theosophical Publishing House Adyar, Madras  Books marked † can be had from the Sasta-Sahitya Mandal, Connaught Circus, New Delhi  Those marked * may be had direct from the author also , address—Dr Bhagavan Das, Benares (Cantt). Full pamphlet of Opinions on the above works, may be had on requisition  Prices are liable to change without notice

---